नैतद्विवदामह इति ॥ (भा)

ननु सार्वधातुकत्वस्याल्धर्मत्वाभावात् कथं प्रतिषेधप्राप्ति-रत आह

इडागमेति ॥ (कै)

उक्तदोषपरिहृत्यविचारान्तरारम्भोऽनुपपन्न इत्यत आह

इदानीमिति ॥ (कै)

प्रतिपादयितुमिति । (कै)

वादिमुखेनैव प्रतिपादयितुमित्यर्थ ॥

आदेशोऽस्येति । (कै)

आदेशिनीत्यत्रीत्यनेन व्यधिकरणं स्थानिसम्बन्धित्वमाश्रय इत्यर्थ । सम्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अत एव स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम ॥ सन्देहबीजं दर्शयति ।

किमिति ॥ (कै)

स्थानिवद्भावादिति । (कै)

[1] अच परस्मिन् इत्यनेन । एवं चोपधात्वाभावो ञ्णित्परत्वा-भावश्चेति भाव ॥ अतिदेशोऽतिदिष्टं चेदर्थासङ्गतिरत आह

आदिष्ट एवेति । (कै)

सुबादीनामादेशेष्वित्यर्थ ॥ तेषु दीर्घत्वे इटि उवङि च स्थानिवत्त्वप्रतिषेध प्राप्नोति ॥

---

१ अ १ । पा १ । सू ५७ ॥

तद्धितत्वमिति । (कै)

भस्य तद्धिते [1]ओर्गुणविधानादितिभाव ॥ ननु पक्षद्वयेऽपि दोषोक्तेः कस्यापि प्रशस्तत्वाभावात् आतिशयिकोऽनुपपन्न इत्यत आह

न्याय्येति । (कै)

[2]युक्तिरित्यर्थ । का युक्ति प्रकृष्टेत्यत्र प्रश्नतात्पर्य्यमितिभाव ॥

प्रत्यासत्त्येति । (कै)

अत एव [3] कष्टाय इत्यादि निर्देशा सगच्छन्ते। एव च प्रत्यासत्त्याश्रयणमेव न्याय्यमितिभाव ॥ भाष्ये

विशिष्ट स्थानिकार्य्यमिति । (भा)

स्वरूपेणालभ्यमानमित्यर्थ । तदाह

यत्कार्य्यमिति ॥ (कै)

'तच्चेष अतिदेशशेष ॥ तद्वारके । अतिदेशद्वारके ॥

यथेति । (कै)

एव च यथा तत्रातिदेशप्राप्तोच्छिष्टभोजनस्यैव वजन न तु स्वाश्रयगुरुत्वप्राप्तस्यैवमत्राप्यतिदेशप्राप्तालविधेरेव वर्जनमितिभाव ॥ भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्व व्यर्थमित्याह

अकारस्येति । (कै)

अन्तरतमत्वादितिभाव । ऋकारस्थानिकावयवविकारोऽचेति

---

१ ओर्गुण । ६ । ४ । १४६ ॥ २ युक्तीत्यर्थं । सम ॥
३ कष्टाय क्रमणे । ३ । १ । १४ ॥

लक्ष्यभेदान्नोद्वोढामितिव लक्ष्येलक्षणस्ये ति न्यायेनाच निर्वाह इत्याह ॥ [1] क्तुन औणादिक ॥ बहुव्रीहौ निष्ठान्तस्य पूर्वनिपात स्यादत आह

## तृतीयेति । (कै)

आनुमानिकेऽपि स्थानिवत्त्वप्रवृत्तिवक्तव्येत्येतद्दार्ष्टान्तिकतात्पर्य्यम् ॥ लोकन्याथाऽऽश्रयेणैतत्प्रत्याचष्टेऽ नन्यत्वात्सिद्धम् इति भाष्ये ॥ नन्ववयवविगमे जात्यभिव्यञ्जकाभावात कथ श्वेतिव्यवहारोऽत आह

## छिन्नेऽपीति ॥ (कै)

## तथाचेति । (कै)

लोपस्य विकारत्वाभावेनैकदेशविकृतोपसंख्यानेऽपि तन्नोक्तरीतिरेवावश्यकीति भाव ॥ अर्थे त्यादि दृष्टान्तार्थम । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्बोधो नस्यादेतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भाव ॥

## अवस्थिते इति । (कै)

न च इप्रसङ्गे उरितिवाच्यमिति नानित्यत्वम् । अनर्थकत्वेनाऽर्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात् । अवयवत्वेन प्रसङ्गे त्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्व स्यादित्यथ ॥ [2] स एवायम्'

---

१ हनो बध च (उ–सू १९४) इत्यनेन क्तुन ॥

२ नित्या शब्दा । नित्येषु च नाम शब्देषु कूटस्थैरविचालिभिवर्णैर्भवितव्यमनपायोपजनविकारिभि । तत्र स एवाय विकृतस्त्वेत्येतन्नित्येषु नोपपद्यते ॥

इति प्रत्यभिज्ञया भाष्ये नित्यत्वमुपलक्षितम । अत एव विकृत इत्यनेन विरोध । अनित्यत्वाभावे हेतु ते प्रसङ्गे इत्यादि । अस्य ह्यथवत्त्वात ते प्रसङ्गे' इत्युक्तिर्नासमञ्जसेत्यथ । तदुपपादक [1] एह" इत्यादि । एव च कार्य्यशब्दवादे न्यायेन सिद्ध नित्यशब्द-वादे तु नेतिवचनारम्भवादितात्पर्य्यम । वस्तुतो वचनारम्भेऽपि विकृतत्वबुद्धिमात्रेण तत्सङ्गतिरित्यवश्य वाच्यम अन्यथा विकृतस्येत्य-सगत स्यात् । तदा तयैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति । अनित्यविज्ञान लित्याद्येकदेश्युक्ति ॥ [2]कात्यायनीयाद्भारद्वाजीय-पाठे हेत्वभिधान च विशेष ॥

## [3]एहरित्यत्रेति । (कै)

प्रत्यचादेशत्व चेह निषेध्यमिति भाव ॥ लोकन्यायेन सिद्धि-खण्डनाय रूपान्यत्वाच्चे ति । तद्व्याचष्टे

## यदीति । (कै)

[4] इदमो म" इत्यादिवदिति भाव । अधस्तान्यथाभावेन जात्यभिव्यञ्जकाऽभाव इति तात्पर्य्यम् । एकदेशविकृतेषु' इति बहुवचनेन लोपस्यापि सग्रहाद अपचद इत्यादावपि स्थानि-वत्त्वमिति बोध्यम ॥ भाष्ये वचन खण्डयति

## इमेऽपीति । (भा)

---

१ अ ३ । पा ४ । सू ८६ ॥ २ भारद्वाजीया पठन्ति । एकदेश विकृतेषूपसख्यान कर्त्तव्यम ॥ ३ अ ३ । पा ४ । सू ८६ ॥
४ अ ७ । पा २ । सू १ ८ ॥

आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भाव ॥ इदमाशयमजानान पृच्छति ।

कथमिति ॥ (भा)

उक्तेनैवाभिप्रायेणाह

आदिश्यन्त इति ॥ (भा)

[1]इमे चेति । (भा)

तुशब्दादय ॥ आदेशपदसामर्थ्यमजानान आह

आदेश इत्यादि ॥ (भा)

प्रत्यक्षादेशस्यैव ग्रहण न्याय्यमित्यभिमान । तदाह

योऽत्रेति ॥ (भा)

ननु तामादे पदसञ्ज्ञायामनाश्रयणेऽपि यथा स्थानिवत्त्वात् पदत्वमेवमुकारस्यापीत्यत आह

सा हीति ।

तेस्य नायमादेश इति भाव । तिङ्त्व समुदायपर्य्याप्तमिति तात्पर्य्यम् । स्थानिवत्त्वद्वारापि नायमुकार पदत्वहेतुतयाश्रीयत इति भाष्यार्थ ॥

आश्रीयते इत्यर्थ इति । (कै)

आश्रयितुमिष्यत इत्यर्थ ॥

तत्रोत्तरमाहेति । (कै)

---

१ इमे चाप्यादिश्यन्ते ॥

एकदेशीति शेष ॥ भाष्ये [१] समुदाये त्यादि। [२] सुप् तिङन्त-मि त्यादौ ति इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाभावात् तकारेकारान्त पदमित्यर्थ । एव चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात पदत्व सिद्धमिति भाव ॥

तिङ्त्वात् । (कै)

तदवच्छिन्नावयवत्वात ॥

तिङ्त्वम् । (कै)

तदवच्छिन्नावयवेकारत्वमित्यर्थ । यथाश्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वाऽऽपत्तिरिति बोध्यम् ॥ ननु प्राधान्ये-नेत्युक्तौ प्रदीपेति न सिद्ध्येदत आह

यत्नेति ॥ (कै)

प्रत्ययेति । (कै)

अनान्तरीयकेत्यर्थ ॥ इदानी सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पचान्तरत्वेन स्वाशय प्रकाशयति भाष्ये

अथवेति ॥ (भा)

सर्वविकार इति । (कै)

---

१ अभ्यन्तरश्च समुदायेऽवयव । तद्यथा । वृक्ष प्रचलन सहावयवै प्रचलति ॥ २ स १ । पा ४। सू १४ ॥

[1] अस्तेर्भू इत्यादौ ॥ [2] योभूत्वा इत्यादि भाष्यस्य प्राग-भावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्व नित्यत्वमिति तात्पर्य्यम । स्थानशब्द प्रसङ्गवाचीत्युत्तरम ॥

## तदसन्निधाविति । (कै)

नित्यस्यावश्यकत्तव्यत्वादारब्धस्य चावश्यसमापनीयत्वादितिभाव ॥ मन्त्राच्छन्दस्त्वयोरभावादाह

## बहुलेति । (कै)

भूतपूर्वं स्थानशब्दप्रयोगमभ्युपेत्येद परिहारान्तरम। अन्यथाऽऽनर्थक्यप्रसङ्गात। न च तत्र स्थानशब्दो दृश्यते सोमस्थाने इत्यादावभूतपूव एव प्रयोगदर्शनादिति यदि भूतपूर्वं इत्यादि भाष्यतात्पर्य्यम् ॥

## न चेति । (कै)

भूतपूर्वं हि स्थानशब्दो निवृत्तिवचन स्यादिति भाव ॥ तत्पत्ते नित्यत्व कथमिति पृच्छति भाष्ये

## कथमिति ॥ (भा)

उत्तरमाह

## [3]बुद्ध्येति ॥ (भा)

---

१ अ २ । पा ४ । सू ५२ ॥ २ स्थानी हि नाम यो भूत्वा न भवति ॥
३ बुद्ध्या । तद्यथा । कश्चित कस्मैचिदुपदिशति । प्राचीन ग्रामादाम्रा इति । तस्य सवत्राम्रबुद्धि प्रसक्ता । तत पश्चादाह । ये क्षीरिणो ऽवरोहवन्त पृथुपर्णास्ते न्यग्रोधा इति । स तत्राम्रबुद्ध्या न्यग्रोधबुद्धि प्रतिपद्यते । स तत पश्यति बुद्ध्या आम्राश्चापकृष्यमाणान न्यग्रोधाश्चोपाधीयमानान । नित्या एव च तस्मिन विषय आम्रा नित्याश्च न्यग्रोधा । बुद्धिस्त्वस्य विपरिणाम्यते ॥

**प्रतिपत्तृवशादिति।** (कै)

प्रतिपत्तृशब्देन तदीया प्रतिपत्तिर्लक्ष्यते तद्वशात्प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते स्वतस्तद्वत्त्वस्य तत्र बाधादिति भाव॥ क्वचित्तु प्रतिपत्तिवशादिति पाठ। तदाह

**न त्विति।** (कै)

आरोपितभूतपूर्वत्वव्यवहारान्ननित्यत्वहानिरिति भाव॥ ननु "प्राचीनम् इत्यस्याचाधिकरणप्रतिपादकत्वात्सप्तमीस्यादत आह

**प्राचीति।** (कै)

सप्तम्यन्तादुत्पन्नोऽस्ताते [१] अञ्चेर्लुग इति लुक्॥ भाष्ये

**तस्य सर्वत्रेति।** (भा)

प्राग्देशवृत्तित्वावच्छिन्न इत्यर्थ। स तत्र न्यग्रोधेषु॥ ननु "आम्रबुद्ध्या' इति न तृतीया अर्थाऽसङ्गते। नापि षष्ठी सम्बन्धिनोऽनुपस्थितेरत आह

**तस्या अनन्तरमिति।** (कै)

अनन्तरपदाध्याहारेण षष्ठीति भाव। केचित्तु आम्रबुद्ध्या इत्यस्य तां विहायेत्यर्थं इत्याहु॥ भाष्ये

**अपकृष्यमाणानिति।** (भा)

तत्र यथा बुद्धेरेवापकर्ष उपधानं चाऽऽम्रेषु न्यग्रोधेषु चारोप्यते तथाऽत्रापि बुद्धिगतोत्पादविनाशयो स्थान्यादेशभावस्य च शब्देष्वारोप इति भाव॥ 'आधानम्' उत्पत्ति॥ ननु उत्सर्गापवादयो स्थान्यादेशभावात्कथं स्थानिवत्त्वमत आह

**बुद्धीति॥** (कै)

---

१ उपधानम् उपपत्ति। क। ग॥

अण्कृतेति। (कै)

ङीब् इत्यत्र ॥ भाष्ये

[१]उक्तं वा (भा)

इति वार्त्तिकस्थम् उक्तम् इत्यस्य व्याचष्टे

[२]विषयेण त्वित्यादि ॥ (भा)

[३]अइउण्सूत्रे एकोऽकार इतिपक्षेऽनुबन्धसङ्कर प्राप्नोति केऽण्यण्कृत प्राप्नोति इतिपूर्वपक्षे विषयेण तु नानालिङ्गकरणात्सिद्धमि'-त्युक्तम । विषयेऽण्कादौ भिन्नलिङ्गकरणात् । इह मुण्डो भव इह जटी भवेति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति । तथा यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नाऽन्यानुबन्धकार्यमिति तदर्थस्योक्त । एव च सामान्यापेक्षत्वा-न्नियमस्य स्थानिवत्त्वप्रयुक्तस्याऽपि व्यावृत्तिरितिभाव । वार्त्तिके-ऽधिकरणस्यैव करणत्वविवक्षया तृतीया । कैयटोक्तव्याख्याने तु अथवा यदत्र श्नादीन् इति वक्ष्यमाणपक्षे एतत्पक्षादेर्लक्ष्यस्य दुर्लभ शब्दमर्यादया वार्त्तिकात्तदर्थाऽलाभश्च तु शब्दस्य पुनरर्थ-त्वेऽपि नानापदाऽनन्वयस्तदवस्थश्च । किं च कैयटोक्तार्थक विषयेण तु पुनर्लिङ्गकरणात्सिद्धमि ति भाष्ये तत्र पठित [३]नत्वेवमिति दिक् ॥ तत्रत्य वा" इत्यस्य व्याचष्टे

---

१ भाष्यवार्त्तिकमिदम् ॥

२ विषयेण तु नानालिङ्गकरणात सिद्धम् । ९ । अ इ उण (१ । १ । आ २–सू १ ) इति शिवसूत्रव्याख्यानावसरे भगवता महाभाष्यकारेणेद वार्त्तिकमुक्तम् ॥ ३ अ १ । पा १ । आ २ । सू १ ॥

३ न नत्वेवम् । सम् ॥

**अथवा सिद्ध त्विति ॥** (भा)

अनुवर्त्तमान षष्ठीतिपद षष्ठीनिदिष्टलाचणिक षष्ठ्या विपरिणम्यत इत्याशयेनाह

**षष्ठीनिर्दिष्टस्येति ॥** (भा)

नन्वेव [१] नाभि नभम् इत्यादौ षष्ठीनिर्देशाभावात्स्थानिवत्ता-

---

१ नाभि नभ च । (उगवादिभ्यो यत । ५। १ । २ । एतवसूत्रस्थगवादि गणसूत्रोऽयम) अथ नाभिशब्दो गवादिषु पठ्यते । तत्रैवोच्यते "नाभि नभ चे"ति । तत्र चोद्यते । नाभेनभभावे प्रत्ययानुपपत्ति प्रकृत्यभावात् । वा । नाभेनभभावे प्रत्ययस्यानुपपत्ति । कि कारणम् । प्रकृत्यभावात । विकृते प्रकृतावभिधेयाया प्रत्ययेन भवितव्य न च नाभिसञ्ज्ञिकाया विकृते प्रकृतिरस्ति । यदेव हि तन्मण्डलचक्राणा मण्डलचक्र तन्नभ्यमित्युच्यते ॥ सिद्ध तु शाखादिषु वचनाद्रूखत्व च । वा । सिद्धमेतत । कथम । शाखादिषु नाभिशब्द पठितव्यो रूखत्व च वक्तव्यम । नाभिरिव नभ्यमिति । क पुनरिहोपमार्थं । यत्तदक्षधारण परिवर्त्तन वा । अपर आह । यत्तदञ्जनोपाञ्जनमिति । न तर्हीदानीमिद वक्तव्य "नाभि नभ चे ति । वक्तव्य च । कि प्रयोजनम । यान्येतान्यरवन्ति चक्राणि तदर्थम । तत्र नाभिसञ्ज्ञिकाया विकृते प्रकृतिरस्ति । यानि चाप्यनरवन्ति चक्राणि तदर्थमपीद वक्तव्यम । दृश्यते हि समुदायादवयवस्य पृथक्त्वम । तद्यथा । वार्ध्री शाखेति । गुणान्तरयोगाच्च विकारशब्दो दृश्यते । तद्यथा । वैभीतको यूप । खादिर चषालमिति । तत्रावयवात समुदाये वृत्ति भविष्यति ॥ अथ यो नभ्यार्थो वृत्त कथ तत्र भवितव्यम । नभो वृत्त । नभ्या शिशपेति ॥ नभ्यात्तु लुग्वचनम् । वा । नभ्यात्तु लुग्वक्तव्य । स तर्हि लुग्वक्तव्य । न वक्तव्य । तादर्थ्यात्ताच्छब्द्य भविष्यति । नभ्यार्थो नभ्य इति ॥

भावेन यत्प्रत्ययसनियुक्तनभस्य भलाङ्गलयोरभावाद् [1] यस्येति लोपो नस्यादत आह

## नाभीति ॥ (कै)

[2] विधानात' । करणात ॥ यत्र तर्हि स्थान्यनुमान तत्र कथमत आह

## विश्रवणेति ॥ (कै)

प्रत्ययविषयम्' । [3]' शिवाद्यण विषयम ॥

## [4]वालवेति । (कै)

---

१ अ ६ । पा ४ । सू १४८ ॥

२ "नाभि नभ च इत्यादौ षष्ठ्या स्थाने प्रथमाया विधानादस्ति षष्ठी ॥

३ शिवादिभ्योऽण् । ४ । १ । ११२ ॥

४ विदूराञ्ञ्य । ४ । ३ । ८४ । अयुक्तोऽय निर्देशो न ह्यसौ विदूरात प्रभवति । किं तर्हि । वालवायात प्रभवति विदूरे सस्क्रियते । एव तर्हि

वालवायो विदूरश्च

वालवायो विदूरशब्दमापद्यते स्वस्मात प्रत्ययो वक्तव्य ॥

प्रकृत्यन्तरमेव वा ।

अथवा प्रकृत्यन्तर विदूरशब्दो वालवायस्य ॥ न वै तत्र वालवाय विदूर इत्युपाचरन्ति ।

न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत ॥

तद्यथा । वणिजो वाराणसी जित्वरीत्युपाचरन्ति । एव वैयाकरणा वालवाय विदूर इत्युपाचरन्ति ॥

वालवायो विदूरश्च प्रकृत्यन्तरमेव वा ।

न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत ॥

वैदूर्यस्य विदूरान्न प्रभव । किं तु [1]'वालवायाद् इति [2]'विदूराद् ञ्य इत्यस्याशङ्कतौ इद वार्त्तिकम । वालवायोविदूर-मापद्यतेऽथास्मात्प्रत्यय । यद्वा वालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इति तदर्थ ॥ ननु [3]विश्रव शब्दादपि प्रत्यय स्यादत आह

विश्रव इति ॥ (कै)

विशेषोऽस्तीति । (कै)

नित्व हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्तत्वाय स्थानिवत्त्वात्पित्त्वे-नानुदात्तत्वे तु लसावधातुस्यापि अदुपदेशाद् इत्यनुदात्तत्वे [4]धातोरुदात्तत्व सिद्धमेवेति भाव ॥

आद्युदात्तार्थमिति । (कै)

इष्टमपि [5]"चित्वप्रयुक्तान्तोदात्तत्व बाधितेत्यर्थ । अन्यच्च विकरणेभ्य" इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भाव । किं च वावृतु इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेष । कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवेति बोध्यम् ॥

इष्टसिद्धये इति । (कै)

वैयर्थ्यान्नियमत्व वा ज्ञापकत्व वेत्यत्र विनिगमकाभावान्नित्त्व-

---

१ वालेरटाइन मुद्रापित विवरणे कैयटे च "वालवाय' इति मकारघटित-पाठ एव सर्वत्रास्ति ॥ २ अ ४ । पा ३ । सू ८४ ॥

३ "विश्रवणादेरसादेशत्वे" इत्यधिक क पुस्तके ।

४ धातो । ६ । १ । १६२ । इत्यनेन ॥ ५ चित । ६ । १ । १६३ ॥

सामर्थ्यादन्यत्र विकरणेभ्य इत्युपदेशबाधकल्पनापेक्षया स्थानिवद् इत्यतिदेशबाधकल्पनस्यैवौचित्याच्चेति भाव ॥

सामान्येनेति। (कै)

न विकरणविषयमेव नापि पित्त्वविषयमेवेत्यथ ॥ भाष्ये

श्यन्नादीनिति। (भा)

उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम ॥

प्रत्ययानुकरणमिति। (कै)

[1] टिड्ढाणञ् सूत्रे साहचर्य्यादिति भाव ॥ ननु एकस्मिन् बहुवचनम् इत्युक्त्या षष्ठ्यभावात कथमादेशलमत आह

एकस्मिन्निति॥ (कै)

भाष्ये

[2]अर्थातीति। (भा)

बहुवचनशब्दो न प्रत्ययपर किन्त्वर्थपर इति भाव ॥

ङ्याब्ग्रहणे अदीर्घ इति (भा)

भाष्ये॥ ननु गङ्गाया इगङ्गी गङ्गीयते क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात। न च तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु सुलोप-

---

१ अ ४। पा १। सू १५॥

२ जात्याख्यायामेकस्मिन बहुवचनमन्यतरस्याम (१।२।५८) एतत सूत्रस्थवार्त्तिकमिदम। अर्थातिदेशात सिद्धम। वा। अर्थातिदेशो ऽयम। नेद पारिभाषिकस्य वचनस्य ग्रहणम। कि तर्हि। अन्वर्थग्रहणम। उच्यते वचनम। बहूनामर्थाना वचन बहुवचनमिति। यावद् ब्रूयादेकोऽर्थो बहुवद्भवतीति तावदेकस्मिन बहुवचनमिति॥

स्त्विति वाच्यम् । आकारेकारप्रश्लेषमादायैतत्प्रत्याख्यानपरभाष्य-विरोधात । सूत्रमतेऽपि नाचल्लोप । प्रत्यासत्त्या ड्याप्पदोपस्थित-ईकाराकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न । तेषामनभि-धानात् । नचेद विशेषण व्यर्थम् । खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावादिति वाच्यम् । न स्थानि-वद" इत्यस्य स्थानिकार्य्यं न लभते इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेऽप्याप्त्वप्रयुक्तकार्य्याभाव शङ्का-वारणार्थं तत । ह्रस्व इति नोक्तम् । चित्राया जातश्चित्र इत्यादौ [1]जातार्थलुकि टापो लुक्यपि [2] प्रत्ययलक्षणेन [3] हल्ङ्यादि लोपापत्ते । ममतु । लुकोऽपि दीर्घभिन्नत्वात तत्रापि न स्थानि-प्रयुक्तकार्य्यातिदेश इति दिक् ॥

## अतिखट्व इति । (भा)

न चात्र ह्रस्व आकारस्येति तद्गतमात्वमल्विधिरिति वाच्यम् । [4] गोस्त्रियोरुपसर्जनस्य इत्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थ ॥ [5] 'अचस्य' इति तु नोपतिष्ठते । अनियमाप्रसक्ते । स्त्रीप्रत्ययत्व च टाङीत्यादिविशिष्टनिष्ठमिति न दोष । सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव गोटाङ्ग्रहण कर्त्तव्यम् इति वार्त्तिककृतोक्तम्। स्वरितत्ववलात् 'स्त्रियाम् इति प्रकृत्य ये विहितास्तेषा ग्रहणमिति भाष्यकृतोक्तम् । विधान चानुबन्ध-विशिष्टस्यैवेति स्पष्टमेवेति दिक् ॥

---

१ नक्षत्रेभ्यो बहुलम ( ४ । ३ । ३७ ) इत्यनेन ॥
२ अ १ । पा १ । सू ६२ ॥ ३ अ ६ । पा १ । सू ६८ ॥
४ अ १ । पा २ । सू ४८ ॥ ५ अ १ । पा २ । सू २८ ॥

**अतिखट्वायेति ।** (भा)

न चाबन्तादङ्गात्परस्य याडिति तदर्थं । उपसर्जनस्त्रीप्रत्यये च तदादिनियमात्'' नैतदङ्गमाबन्तमिति स्थानिवत्त्वेऽपि न याट प्रवृत्तिरिति वाच्यम। प्रत्ययग्रहणपरिभाषयाऽऽबन्तग्रहणे तेन चाङ्ग-विशेषणे आबन्तान्त यदङ्गमित्यर्थान्न दोष । अत एवाङ्कखट्वाया-मित्यादौ याट्सिद्धिरिति भाव ॥ नन्वेवमपि दीर्घे कृते स्थानि-वद्भावेनाप्त स्यादेवाऽय निषेधस्तु न दीर्घत्वादत आह

**अच चेति ।** (कै)

एव च स्थानिवद्भावेन तद्लाभस्तत स्थानिन्यसत्त्वादिति भाव ॥ भाष्ये

**ननु चेदानीमिति ।** (भा)

वार्त्तिकाकरणे इत्यथ ॥

**सत्यपीति ।** (भा)

निष्कौशाम्बिरित्यादौ ॥

**प्रश्लिष्टनिर्देशादिति ।** (भा)

अतिखट्वायेत्यादौ आकारस्य लाक्षणिकत्वादेव न दोष । खट्वायै इत्यादौ प्रत्युत दोषो यतो लक्षणप्रवृत्ति विना यद्रूपा-ऽसम्भवस्तदेव लाक्षणिक परिभाषाया निषेधविषय । नचेह तथा। एकादेशात प्रागपि तद्रूपसत्त्वादित्याहु ॥ अय च प्रश्लेषो [1] याडाप [2] आङि चाप [3] औङ आप [4] ङेराम्नद्याम्‌

---

१ अ ७। पा ३। सू ११३॥ २ अ ७। पा ३। सू १०५॥
३ अ ७। पा १। सू १८॥ ४ अ ७। पा ३। सू ११६॥

[१]'हल्ङ्याब्' इत्येतेषु। [२]ह्रस्वनद्याप इत्यत्र तु प्रश्लेषे न मानमिति दिक्॥ ननु भाष्यमते सूत्रमते च अतिखट्वस्य अ। अतिखट्वा इत्यत्र सुलोपो भवति। वार्त्तिकमते तु न। अतिखट्वे आबन्तत्वस्य विच्छेदादग्रे प्ररोहाऽसम्भवादिति चेन्न। अनभिधानेनैषा प्रयोगाणामभावात। यदा स्थानिवद्भावस्य कार्य्यार्थत्वेनाऽतिखट्वशब्दे आकारप्रश्लेषे फलाभावात्तदप्रवृत्तौ स्थानिन्यात्वबुद्धेरभावात तदादेशे तदारोह सूत्रमते भाष्यमते च दुलभ। परम्परया काय्यमादायाऽऽद्यस्थानिवत्त्वप्रवृत्तौ मानाभावात। यत्तु वार्त्तिकमते लोपाप्राप्त्या भाष्यादिमतेऽपि ईकारादिप्रश्लेषान्तरेण लोपाभाव एव वाच्य। एकप्रश्लेषेणैवाऽतिखट्वव्यावृत्तौ सिद्धायां दीर्घग्रहण सूत्रमते भाष्यमते तत्प्रत्याख्यानाय कृतप्रश्लेषान्तर च नियमार्थं न कदाचिद् रूपान्तर प्राप्नौ यौ ङ्यापौ इति एव च न दोष इति। तन्न। मानाभावात्। अतिखट्वाय इत्येव वार्त्तिकप्रयोजन प्रदर्श्याऽऽकारप्रश्लेषेण हि तत्प्रत्याख्यातम्॥ भाष्ये

**आहि भुवोरिति।** (भा)

[३]भुव ईट्" इति [४]'अस्तिसिचोऽपृक्ते' इत्याभ्यां प्राप्ति॥

**[५]द्विसकारको निर्देश इति।** (भा)

[६]'अस्तिस्सिच' इति सूत्रपाठ इति भाव। प्रकारान्तरे तु

---

१ अ ६। पा १। सू ६८॥ २ अ ७। पा १। सू ५४॥
३ अ ७। पा ३। सू ६३॥ ४ अ ७। पा ३। सू ९६॥
५ अस्ति सिचोऽपृक्त इति द्विसकारको निर्देश॥
६ अ ७। पा ३। सू ९६॥

आदेशैरपहारात सद्व्योच्चारणाभावेन निर्देश इति भाष्याशयस्थम । अत एव वार्त्तिककृता सिजलुक स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्ध सकारस्य सिज्विशेषणलमित्याशयेन । तद्विशेषण-सामर्थ्यात श्रूयमाणसान्तपरमिति प्रत्ययलक्षण सूत्रस्य विषय-लेऽपि न दोष । भाष्यकृता तु मध्यमणिन्यायेनोभयसम्बन्धमङ्गी-कृत्य भुव स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम ॥

नाय खल्विति । (भा)

यद्यपि वृद्धिर्बधस्यादन्तलेनापि वारयितु शक्या तथापि तलांश-प्रत्याख्यानायेदमावश्यकमिति भाव ॥

इड्विधिश्चेति । (भा)

यथेड्विधि सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यय ॥ इड्विधेय इत्यस्य तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारेति शेष ॥

आवधिषीष्टेति । (भा)

[1] आङो यमहन इत्यात्मने पदम् ॥

प्रतिषेध प्राप्नोतीति । (भा)

तत्र वधे स्थानिवत्त्वेनाङ्गतया निषेध प्राप्त इण्निषेधरूपे कार्य्ये स्थानिवत्त्वप्रतिषेधेनाङ्गलाभावान्नेत्यथ । बधेरपि सूचे स्थान्य-नुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तल बोध्यम् ॥

प्रकृतिस्वरस्य । (भा)

प्रकृतित स्थान्यनुरूपतया प्राप्तस्यानुदात्तलस्य ॥

---

१ अ १ । पा ३ । सू २८ ॥

**प्रत्ययस्वरम् । (भा)**

तत्प्रयुक्तनिघातम् ॥ नन्वत्रोदाहरणे [१] तिङ्ङतिङ" इति निघातेन भाष्यमत आह

**यदा यदिति । (कै)**

यदेत्यस्य तदैतदुदाहरणमित्यनेनान्वय । मध्ये भवति तदा इत्यपाठ ॥ भाष्ये

**आर्द्धधातुकसामान्ये इति । (भा)**

आर्द्धधातुक इति वल्लिङीत्याद्यपि विषयसप्तम्येवेति भाव । एव चाद्युदात्तनिपातने उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनानुदात्तत्वाभावात स्थानिवद्भावेनाङ्गत्वे सत्यपि निषेधाप्राप्त्या तन्निषेधो न कार्य्य इति तात्पर्य्यम् ॥

**आकारान्तादिति । (भा)**

[२] विभाषा लीयते [३] विभेतेर्हेतुभये इत्यात्र [४]"लीलोर्नुग्लुकौ' इति [५] भियो हेतुभये इति च नुक्षुकौ ॥

**प्रश्लिष्टनिर्देशादिति । (भा)**

यद्यपि भिय इत्यत्र प्रश्लेषे एकादेशस्य [६]'क्षदतिङ्" सूत्रभाष्योक्तरीत्या पूर्वधर्मावच्छिन्नोद्देश्यके इयङ् विधौ [७] अच परस्मिन्' इति स्थानिवत्त्वेनेयङ्दुर्लभस्तथापि सौत्रत्वात् स इति बोध्यम् । [८]"क्षियो निष्ठायाम् इति दीर्घविधाविवेतिदिक् ॥

---

१ अ ८ । पा १ । सू २८ ॥ २ अ ६ । पा १ । सू ५१ ॥
३ अ ६ । पा १ । सू ५६ ॥ ४ अ ७ । पा ३ । सू ३९ ॥
५ अ ७ । पा ३ । सू ४ ॥ ६ अ ३ । पा १ । सू ९३ ॥
७ अ १ । पा १ । सू ५७ ॥ ८ क्षियः । ६ । ४ । ५९ ॥

## [1]शाभावेत्यादि । (भा)

[2]"शा हौ' [3] हन्तेज [4] झल्भ्यो हेधि [5]' उतश्च प्रत्ययाद्' [6] 'घ्वसोरेद्धौ" इत्येते ॥

## परत्वादिति । (भा)

युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्य्याभावरूपासम्भवस्य सत्त्वात । तादृशाऽसम्भव एव च विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी स्थानिवद्भावस्तु कार्य्यप्रवृत्त्युत्तर न प्रवृत्तिकाले इति युगपदसम्भव स्पष्ट एवेति भाव । एवमग्रेपि ॥

## परत्वात्तिस्रभाव इति । (भा)

न च [7]लिङ्गविशेषविभक्तिसञ्ज्ञाऽपेक्षया प्रत्ययविशेषाऽपेक्षस्याऽप्यन्तरङ्गत्वातत्र्यादेशापत्ति । कि च स्वरूपेणोपादाने विशेषापेक्षत्वकृतवहिरङ्गत्व नेत्यर्थस्य [8] पाद पद इति सूत्रस्थभाष्ये ध्वनितत्वेन सर्वथा त्र्यादेशस्यान्तरङ्गत्वमिति वाच्यम । अर्थसञ्ज्ञाकृतवहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात । एतेन चतस्र इत्यपि व्याख्यातमिति दिक ॥ विदुष इत्यत्र [9] विदे शतुर्वसु इति शत्रादेशो वसु ॥

---

१ लोडादेशे शाभावजभावधित्वहिलोपैत्त्वप्रतिषेध । वा २५ ॥

२ अ ६ । पा ४ । सू ३५ ॥ ३ अ ६ । पा ४ । सू ३६ ॥

४ अ ६ । पा ४ । सू १ १ ॥ ५ अ ६ । पा ४ । सू १ ६ ॥

६ अ ६ । पा ४ । सू ११९ ॥

७ लिङ्गविशेषविभक्तिसञ्ज्ञाऽपेक्षातिस्रपेक्षया । क ॥

८ अ ६ । पा ४ । सू १३ ॥ ९ अ ७ । पा १ । सू ३६ ॥

[1]शतुरनुम इत्यादि । (भा)

अनुम् शता तदन्तात्परा नदी अजादिश्च शसादिर्विभक्ति-रुदात्ता इत्यर्थः ॥

यदि प्रत्याहारेति । (भा)

उमहितशचन्तेत्यर्थ इत्यभिमानः ॥

अनुम्क इति । (भा)

वसोरपि व्यपदेशिवद्भावेनोम्वत्त्वम् ॥

आगमग्रहणे हीति । (भा)

हिरण्यर्श्री । तद्ग्रहणेऽपीत्यर्थः ॥ कैयटे

अनुमेव शतेति । (कै)

यद्यपि शताऽपि प्रत्याहारान्तर्गतस्तथापि सामर्थ्यात्तद्भिन्नस्यैव प्रत्याहारान्तर्गतस्य ग्रहणमिति भावः । व्यापकत्वात्प्राथम्याच्च तनादीत्युकारेण प्रत्याहार इति तात्पर्य्यम् ॥ भाष्ये

विभाषा पूर्वत्वं प्राप्नोतीति । (भा)

अत्र वार्त्तिके भाष्ये च पूर्वशब्देन तदपवादो लक्ष्यते ॥ भाष्ये [2]"सर्वचेति" "चावङ्" इति सूत्रस्याप्युपलक्षणम् । ध्वनितं चेदम् [3]"अवङ्" सूत्रे भाष्ये इति षष्ठे निरूपयिष्यामः । अनन्तरेति न्यायेन तदपवादोऽपि परत्वाद्यणमपि बाधित्वा स्यादित्याशयः । यत्तु कैयटेन "तस्मादेङ्" इत्यादि "प्रसङ्ग उक्त" इत्यन्तमुक्तम् । तत्तु चिन्त्यमेव ।

---

१ अ । ६ । पा १ । सू १७३ ॥ २ अ ६ । पा १ । सू १२२ ॥
३ अ ६ । पा १ । सू १२३ ॥

[१] एङ पदान्ताद इति सूत्रे एङ् पदोच्चारणसत्त्वेन शङ्काया असम्भवदुक्तिकत्वाद भाष्योक्ते तु एङपदाभावादनुवृत्तिमजानत शङ्केत्युक्तिसम्भवात् ॥ भाष्ये

**एवमपीति ।** (भा)

लाक्षणिकत्वादस्य गोशब्दस्य स्वत प्रकृतिभावाऽप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यथ । यदि तु [२] औत - सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्त्तते तदेद वचन न कार्य्यम। एङो लाक्षणिकत्वात तदृशे स्थानिवत्त्वानपेक्षणेनातिदेशविषये तदप्रवृत्तिरित्यपि नेत्याङ्क ॥ भाष्ये

**तपरकरणसामर्थ्यादिति ।** (भा)

एव च गत्त्वाविवक्षितत्वेनाल्विधित्वात् स्थानिवत्त्वाऽभाव इति भाव ॥

---

# अचः परस्मिन् पूर्वविधौ ।१।१।५७॥

पूर्वेणैव सिद्धे इद किमथमत आह

**अल् इति ॥** (कै)

**उरदत्वे इति ।** (कै)

अङ्गाक्षिप्तप्रत्ययपरत्वनिमित्तके इति शेष । [३] लिप्यभ्यासस्य'

---

१ अ ६। पा १। सू १ ८॥ २ अ १। पा १। सू १५॥
३ अ ६। पा १। सू १७॥

इत्युभयेषा ग्रहणाद् [1]हलादि शेषात प्राक् सम्प्रसारणे वस्य सम्प्रसारणात्तन्निषेधाच्च प्राङ्नित्यत्वात्परत्वाच्चोरदत्वमिति भाव ॥

एवमचितीति । (कै)

उत्तरपदस्याधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे लब्धे ह्रस्वान्ते इत्यचान्तस्य ग्रहणेन भूतपूर्वगतेराश्रयणेनेद साधयितु शक्यमिति कश्चित् । तन्न । तदभावे ह्रस्वादावित्यर्थापत्ते । ह्रस्वान्ते इत्यच [2] नञ्सुभ्याम् इत्यनुवृत्तावपि [3] बहोनञ्वद इति वचनाद बहुचितीक इत्युदाहृतम् । प्रत्युदाहरणादिचिन्ता वृत्तिकाराणामुचिता न तु भाष्यकृतोऽत आह

वार्त्तानीति । (कै)

वृत्त्युदाहृतानि ॥ भाष्ये

शकार । (भा)

[4]"छ्वो शूड्' इति विहित ॥

अत एवेति । (कै)

प्रत्ययनिरपेक्षतयान्तरङ्गत्वेन तुक शादेशात् प्राक् प्रवृत्तनादेवेत्यय । अत्रान्तरङ्गत्व प्रथमप्रवृत्तिकत्वरूपम् ॥

युगपदिति । (कै)

बलाबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव सम्भवादिति भाव ॥

---

१ अ ७ । पा ४ । सू ६ ॥ २ अ ६ । पा २ । सू १७२ ॥
३ बहोर्नञ्वदुत्तरपदभूम्नि । ६ । २ । १७५ ॥
४ अ ६ । पा ४ । सू १९ ॥

यथेति । (कै)

कारक किरतीत्यादौ अन्तरङ्गत्वातपूर्वमकादेशविकरणौ इति भाव ॥

सतुगिति । (कै)

[1]यद्यप्यक्ततव्यूहपरिभाषया तुग्व्यावृत्ति कर्त्तु शक्या तथापि तदभावस्यापि तुग निर्देशो ज्ञापक । न च वाञ्छते क्विपि वाञ्छावित्यादौ शाभावाय सतुक् निर्देश इति वाच्यम। शादेश-योग्यप्रत्ययपरस्य वाञ्छते प्रयोगाभावात । अत एव सतुक निर्देश सामर्थ्यात सर्वादेश श इति षाष्ठभाष्योक्त स गच्छते ॥ ननु सतुक निर्देशेऽपि तेनाङ्गविशेषणात तदन्तविधौ [2] 'अलोऽन्त्यस्य' इत्यस्यैव स्यादत आह

समुदायेति ॥ (कै)

अनर्थकत्वादिति । (कै)

[3] नानर्थक ' इति निषेधादिति भाव ॥ सतुक्कनिर्देशे लिङ्ग-माह

एव चेति ॥ (कै)

नहीति । (कै)

अयोगवाहेषु हलत्वाच्त्वयो समावेशदर्शनेन तयोरविरोध इति भाव ॥ ननु स्वाश्रयाऽनिवृत्तौ वाय्वारित्यत्र दोषोऽत आह

वाय्वोरितीति ॥ (कै)

---

१ अक्ततव्यूहा पाणिनीया । ५८ । परिभाषेन्द- ॥

२ अ १ । पा १ । सू ५२ ॥

३ नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे । १ ४ । परिभाषेन्दुशे- ॥

**असिद्धत्वनिषेधादिति ।** (कै)

ऊठ इति शेष । वहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये ॥

**योऽनादिष्टादच इति ।** (कै)

अज्ग्रहण सिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्य्यम् ॥

**स्थापयिष्यमाणत्वादिति ।** (कै)

व्याख्यास्यमानत्वादित्यर्थ ॥ अत्र स्वाश्रयकार्य्याभावाऽतिदेश-स्यापि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरम

**अथवा योऽनेति ।** (भा)

अय भाव । अभावातिदेशेऽपि स्थानिप्रयुक्त भवत्यादेशप्रयुक्त नेत्यर्थ इति ॥ तदाह

**समुदायेति ।** (कै)

यथा सूत्रे सानुबन्धकग्रहणे तस्यानल्विधित्व स्थानित्व च नास्ति तथा आदेशत्वमपि सूत्रोपात्तस्यैवेतिभाव । एव च यण् नादेश-प्रयुक्त किन्तु तदवयवप्रयुक्त इति नासौ वाध्यत इति तात्पर्य्यम् ॥

**[1]आदेशो गृह्यत इति ।** (कै)

आदेश इति गृह्यते इत्यर्थ ॥

**न प्राप्नोतीति ।** (कै)

स्थानिवत्त्वेनेति शेष ॥ भाष्ये

**आगत्येति** (भा)

मलोपस्यापि ह्रस्वस्य पित्कृत्प्रत्ययपरत्वसपादकतया तुग्विधावाश्रयण-

---

१ आदेशो गृह्यत इति । इति नास्ति क पुस्तके ॥

मित्यथ । अभावातिदेशे चैतत्फलम् । [1]अत एवाऽभावातिदेशे पटयतीत्यादौ वृद्धिर्नेत्यग्रे भाष्य सङ्गच्छते ॥ ननु खाश्रयवत्त्वादिना यलोपसिद्धावपि आलोप स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमावश्यकमेवेत्यत आह

**अव्युत्पन्नत्वादिति ॥ (कै)**

**आकारलोप इति । (कै)**

[2]'आतो लोप इत्यनेन । जनेरौणादिके यकि [3] ये विभाषा इत्यात्वे टापि तेनैकादेशे तस्य पूर्वान्तवद्भावादार्द्धधातुकत्वेन युवतिशब्देन बहुव्रीहौ णिडादेशे यलोपेऽवशिष्टस्य स्थानिवत्त्वेनार्द्धधातुकादिसत्त्वात । यातिरितिवद इति भाव ॥ ननु आभीयत्वेनाऽऽत्वस्यासिद्धत्वाल्लोपो नेत्यत आह

**न चेति ॥ (कै)**

**व्याश्रयत्वादिति । (कै)**

ये आत्वम् आस्थानिके णिडि लोप इत्यात्वनिमित्तापेक्षया न्यूननिमित्तकत्वाद् व्याश्रयता ॥ भाष्ये

**द्विपदिकेति । (भा)**

द्वौ द्वौ पादौ ददातीति [4] तद्धितार्थे ति समासे [5] पादशतस्य" इति वुन्लोपौ ॥

---

१ "अत एव" इत्यारभ्य "सगच्छते" इत्यन्त नास्ति क पुस्तके ॥

२ अ ६ । पा । सू ६४ ॥ ३ अ ६ । पा ४ । सू ४३ ॥

४ अ २ । पा १ । सू ५१ ॥

५ पादशतस्य सख्यादेर्वीप्सायां वुन् लोपश्च । ५ । ४ । १ ॥

[1]परस्मिन्नितीति । (भा)

बहुविधाने परनिमित्तकत्वव्यवहाराभावादित्यथ ॥ पुनर्लोप-वचनेन यथा स्थानिवत्त्वाभावस्तथाऽभिनयति

पुनर्लोपेति ॥ (भा)

भाष्ये वैयाघ्रपद्ये व्याघ्रस्येव पादावस्येति बहुव्रीहौ [२] पादस्य लोप' इति लोपे [३]गर्गादित्वाद्यञि [४] पाद पद्" इति पद्भावे [५] न य्वाभ्याम् इत्यैच् ॥ ननु स्थानिवत्त्वादित्ययुक्तन्तेन विनापि टित एत्वात् प्राग्यौवणयोरित्यस्य परत्वात्प्राप्तेरत आह

इट इति । (कै)

अन्तरङ्गत्वादिति भाव ॥

नित्यत्वादिति । (कै)

लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीतिभाव । यद्यपि लुकि इलोपप्राप्ते सोऽपि नित्यस्तथापि विकरणस्यप्रधार-णाभावाभिप्रायेणेदम् ॥ ननु परस्मिन्नित्यस्याभावे श्नम्लुक स्थानि-वत्त्वेन [६] एरनेकाच' इति यण स्यात् तत्र च कृते यलोपे स्थानि वत्त्वनिषेधेन इकारपरत्वाऽभावाद न लोपप्राप्तिर्यलोपे लोपरूपाजादेश एव नेति नियमस्त्वनिमित्तभूताऽजादेशविषय एवास्तु परस्मिन् इति च न कार्य्यमत आह

१ परस्मिन्निति वचनाद्भवति ॥ २ अ ५ । पा ४ । सू १३८ ॥
३ गर्गादिभ्यो यञ् । ४ । १ । १०५ ॥ ४ अ ६ । पा ४ । सू १३० ॥
५ अ ७ । पा ३ । सू ३ ॥ ६ अ ६ । पा ४ । सू ८२ ॥

## [1]एरनेकाच इति ।

एतेन प्रवलुक स्थानिवत्त्वेन व्यवधानात् योवर्णयोरित्यस्य [2]न प्राप्तिरित्यपास्तम ॥

## ह्रस्वादित्येवेति । (कै)

से स्रुतोशब्दादावप्येवम् ॥ अच स्थानिवत्त्वेऽपि न ह्रस्वान्तता तचाऽऽह

## खट्व इति । (कै)

लोप सिद्ध इत्यनुषज्यते । स्थानिवत्त्वादेवेकाराकारप्रश्लेषेऽपि न दोष ॥

## नैतेभ्य इति । (कै)

एव दीर्घैकारान्तप्रकृतिकसे इत्यादीनामेकाचरकोशबोधितस्य रा इत्यस्य च सम्बुद्धावभिधानाभावो बोध्य । अत्रेद चिन्त्यम् । ओग्रहणस्य भाष्ये कृतत्वेन दीर्घोकारान्तप्रकृतिकओकारान्तानभिधाने मानाभाव । गोऽयम् इति भाष्य तु द्योशब्दस्य सवसमतया ओकारान्तोपलचणतया व्याख्येयमेव सर्वैं । किं च सबुद्धावनभिधानेनोपपत्तौ सवथा विजभावकल्पना कुत इति । अपरे तु पूर्वविधावित्यस्याभावऽय विचार । तच दीर्घान्तप्रकृतिक एकारान्ते स्थानिवत्त्वेनैडोऽभावाद् विनातिदेशबाध प्रत्याहारग्रहणचारितार्थ्यस्य वक्तुमशक्यत्वादनभिधानकल्पने न मानम् । नचेद भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमिति वाच्यम् ॥ अथवा

---

१ अ ६ । पा ४ । सू ८२ ॥ २ अप्राप्ति । सम् ॥

**योऽचादेश इति** (भा)

भाष्येण तदाश्रयणात् । आगत्य वैयाघ्रपद्य इत्यादे प्रत्युदाहरणेन तदाश्रयणाच्चेत्याह ॥ भाष्ये

**गोऽर्थमेतदिति ।** (भा)

अनिष्टलोपसिद्ध्यर्थमेव तत । स्थानिवद्भावेनैङ्त्वादितिभाव ॥

**बाभ्रवीया इति ।** (भा)

[1]मधुबभ्रोरिति यञि वृद्धौ ओर्गुणेऽपि [2]वृद्धाच्छ [3] यस्येति' लोपे [4] हलस्तद्धितस्य' इति सूत्राद् हल इत्यनुवर्त्तमाने [5] आपत्यस्य इति सूत्रेण यलोप ॥ ननु सिद्धान्तेऽपि यनिमित्तो वान्तादेश कथ यलोपनिमित्त स्यादत आह

[6]**सनिपातेति ॥** (कै)

भाष्ये

**नैधेय इति ।** (भा)

निपूर्वाद्धाञ किप्रत्यये आतो लोपे [7]गतिसमासे [8]' ह्यच' [9] इतश्चानिञ' इति ढक॥ ननु च [1] वेभिदिता' इत्यत्राल्लोप यलोपाभ्या प्रागेव परत्वादिट । न च तदा प्रतिषेधप्राप्तिरत आह

---

१ मधुबभ्रोर्ब्राह्मणकौशिकयो । ४ । १ । १०६ ॥

२ अ ४ । पा २ । सू ११४ ॥ ३ अ ६ । पा ४ । सू १४८ ॥

४ अ ६ । पा ४ । सू १५ ॥ ५ अ ६ । पा ४ । सू १५१ ॥

६ सनिपातलक्षणो विधिरनिमित्त तद्विघातस्य । ८५ । परिभाषेन्दुशे–॥

७ अ ६ । पा ४ । सू ६४ ॥ ८ कुगतिप्रादय । २ । २ । १८ ॥

९ अ ४ । पा १ । सू १२१ ॥ १ अ ४ । पा १ । सू १२२ ॥

नित्यत्वादिति । (कै)

तत इत्यनेनेटोऽनित्यत्वमुक्तम॥ ननु कृतद्विवचन नैकाजत आह

उपदेशेति॥ (कै)

ननु भिद्य भिद्य इति द्विवचनरूपादेशस्य न भिद्युपदेशे उपदेश इति कथमुपदेशे एकाचत्वमत आह

द्वि प्रयोगश्चेति । (कै)

यल्लोपेऽवशिष्टस्यैव बेभिद इत्यस्य उपदेश इति भाव ॥ परे तु [1] एकाच उपदेश इत्यत्र [2] एकाचो द्वे इति सूत्रस्थभाष्यरीत्या विहितविशेषणाश्रयणादङ्गसञ्ज्ञायामल्लोपस्य स्थानिवत्त्वेन इजादिनिरूपिताङ्गत्वस्य बेभिद इति समुदायेऽभावाच्च पञ्चमीसमास विनापि न तत्रानुपपत्तिरित्याहु ॥

वर्णनिर्देशे त्विति । (कै)

स्थानिन्यकारो न विवक्षित इति वर्ण एव तत्र स्थानी ठगादिप्रत्ययेष्वप्यकारस्तथैव आदेशे च विवक्षित इति ठत्वाऽभावात प्राप्तिरेव नेतिभाव ॥

[3]सन्निपातेति । (कै)

इद च 'ठक् छसोश्चे' ति वार्त्तिकभाष्ये स्पष्टम् ॥

न भवतीति । (कै)

न च अपीपचन इत्यत्र [4] न पदान्ते ति निषेधात् स्थानिवद्भावो दुर्लभ इति वाच्यम्। पदचरमावयवे कर्त्तव्ये आदेशस्य

---

१ अ ७। पा २। सू १ ॥ २ अ ६। पा १। सू १॥
३ परिभाषेन्दुशे–८५॥ ४ अ १। पा १। सू ५८॥

पदान्तरस्यैव ग्रहणादत्र तदप्राप्तेः । पदेऽन्त इत्यस्य भाष्ये वक्ष्यमाणत्वेनैतदर्थलाभ । केचित्तु पूर्वोत्तरसाहचर्य्येणाभ्यस्तस्य भावरूपादेशानपहृतविकरणकस्य ग्रहणादच प्रत्यैषिषन् इत्यादौ च न दोष इत्याहुः । वस्तुत ईदृशसाहचर्य्याश्रयणाऽपेक्षया पञ्चमीसमासाऽऽश्रयणे गौरवाभाव इति अपीपचन् इति तदुदाहरणमेव बोध्यम् ॥

## न च तस्मादिति । (कै)

निमित्तत्वेनाश्रितादितिशेष । वस्तुतो निमित्तत्वेनाश्रितादित्यव्यवधानोपलक्षणम ।

## न च तस्मादिति । (कै)

ओकारेण व्यवधानादित्यर्थ । तदग्रे निर्दिष्टपरिभाषाबाधे मानाभावादिदमेव युक्तम् । निमित्तत्वेनेत्यादे शब्दमर्य्यादयाऽलाभाच्च । अत एव तथा हि गोशब्दे 'त्यादिसाधकमन्यथोक्तार्थस्योपपादनानपेक्षत्वेन तद्वैयर्थ्यं निमित्तत्वेनाश्रितादित्येतद्ग्रहितस्य युक्तत्व चेत्यन्ये ॥ ननु विधिग्रहणे कृतेऽपि कथ स्थानिवत्त्वेन स्वाश्रयनिवृत्तिरत आह

## अच इति । (कै)

"अच परस्मिन् पूर्व इत्येको योग । 'पूर्वे"ति लुप्तविभक्तिक विधौ' इति द्वितीय । तेन स्थानिवदेवेति नियमाश्रयणमितिभाव ॥ भाष्ये

## विधिमात्रे (भा)

इत्यस्य विवरणम् 'अनाश्रीयमाणायामपि प्रकृताविं"ति स्थानिनीत्यर्थ ॥

## वाय्वोरिति । (भा)

अत्र न बहिरङ्गासिद्धत्वम् । उभयोर्वर्णनिमित्तत्वेन समत्वात् । पूर्वं पूर्वमन्तरङ्गमित्यपि युगपत्प्राप्तौ पूर्वमन्तरङ्गप्राप्तिनियामक न तु जातस्यासिद्धत्वे इति भाव ॥ भाष्ये स्वशब्देन स्थान्यादेश-श्चोच्यते । अपरविधाविति तु वक्तव्यमि त्यारभ्य कथ यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानी त्यन्ता एकदेश्युक्ति । आयन्ना-वन्नित्यनयोरसिद्धवत् सूत्रेण सिद्धे । धिन्वन्तीत्यादावुकारशब्द-वृत्त्याद्धधातुकत्वस्याबधमत्वेन तस्य दुर्लभत्वादिटोऽप्राप्ते । सिद्धान्ति-नापि भावसाधनविधिशब्दस्याऽप्युपादानमत्रेति सिद्धान्त बोधयितु तन्नोक्तम् ॥ भाष्ये

## [1]धिन्वन्तीत्यादि । (भा)

यद्यप्यङ्गात्परस्य वलादेरिडित्यर्थात्पूर्वविधावित्युक्तावपि पञ्चमी-समासेनेद सिध्यति । तथाऽपि अङ्गसञ्ज्ञानिमित्तस्येत्यर्थ इत्यभि-प्रायेणेदमित्याहु ॥

## उपलक्षणार्थत्वादिति । (कै)

इदमत्यग्रन्थयोजनमात्र नलय सिद्धान्त इति बोध्यम् । अत एवादिपद चरितार्थम् । [2]यण प्रतिषेधो वाच्य इतिवदिदमना-श्रित्येदमितितत्त्वम ॥

## पदान्ते विधातव्ये इति । (कै)

पदचरमावयवे कर्त्तव्ये इत्यर्थ ॥

---

१ धिन्वन्ति कृण्वन्ति । यणादेशे कृते वलादिलक्षण इट् प्राप्नोति । स्थानिवद्भावान्न भवति ॥　　२ प्रतिषेधो वाच्य–। सम ॥

## ततश्चेति । (कै)

एव च तत्सूत्राऽकरणलाघवाऽनुरोधेनापरविधावित्येव वक्तव्यमिति भाव । निन्यतुरित्यादिसिध्यये तस्यावश्यकत्वात चिन्त्यमिदम्। भाष्ये तु सम्भवमात्रेणेदमुदाहृतम्। उरदत्त्वमपि स्थानिवद्भावेनैव सुलभ लक्ष्यविशेषे लक्ष्यानुरोधादयमपि रूपातिदेश इति वा- कैयटाशय । स्थान्यादेशयोरन्यतरापेक्षया परत्वमाश्रित्य शङ्कते

## नन्विति ॥ (कै)

## निमित्तेति । (कै)

निमित्त च यस्य स्थानिवत्त्व तदीय ग्राह्यम्। किन्त्विदमयुक्तम्। एतन्न्यासखण्डनायाग्रे भगवता निमित्तस्यावधिताया वक्ष्यमाणतया तदनाश्रयेणैवैतद भाष्यप्रवृत्ते ॥ अपरविधावितिन्यासेऽपि पञ्चमीसमासस्य वक्तु शक्यत्वेन तत्सग्रह इत्युचितम्। वार्त्तिक तु स्वविधिसग्रहार्थमिति स्पष्टमेव। न चात्र पञ्चमीसमासे द्वे गौरित्यत्र स्वस्मात्परस्य विधावपिस्थानिवत्त्व स्यादिति वाच्यम्। पञ्चमीसमासानित्यत्वेनादोषात ॥

## प्रत्याहारग्रहणादिति । (कै)

[1]सेस्रुतो इत्यादीनामनभिधानाश्रयेणैतदुक्तम् ॥ ननु बाभ्रवीया इत्यत्र [2]"आपत्यस्ये' तिलोपेऽवादेशस्य स्थानिवत्त्व स्यात। अवादेशनिमित्तयादिप्रत्ययसम्बन्धिन एव विधे सत्त्वात। न च [3]"न

---

१ सेः स्रुव । ग ॥ २ अ ६ । पा ४ । सू १५१ ॥
३ अ १ । पा १ । सू ५८ ॥

पदान्ते ति निषेध । [1]स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेधादत आह

बाभ्रवीया इति ॥ (कै)

ढको विधिरिति । (कै)

विधिशब्दो भावसाधन । सम्बन्धसामान्यषष्ठ्या समास ॥ [2]द्वयोरेकस्येत्यादिनिर्देशात् स्वविधौ स्थानिवत्त्वमनित्यमिति बाभ्रवीयनैधेययोन दोष इति परे ॥ भाष्ये [3] ऽथे त्यादिना सगृहीतमि त्यन्तेन काका प्रश्न । तदेवाह

व्यवधानात् प्रश्न इति ॥ (कै)

साक्षादिति । (कै)

एव च उत्तरस्येत्यस्यानुपस्थाने तदङ्ग निर्दिष्टग्रहणमपि नोपतिष्ठत इति भाव ॥

तस्मिन्निति । (कै)

[4] तस्माद" इति सूत्रे [5] तस्मिन् इत्यतोऽनुवर्त्तमानस्य निर्दिष्टस्येत्यथ । [6]वरेग्रणाच्च लिङ्गादच सूत्रे तदनुपस्थितिर्बोध्या ॥

---

१ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत (न पदान्त द्विवचन— —१ । १ । ५८ । एतत सूत्रस्य वार्त्तिकम) ॥

२ द्वयोरेकस्य इतरच् । देयम्दयो । किरतौ लवणौ । इत्यादिज्ञापकमत्र ॥

३ अथ निमित्तेऽभिसम्बध्यमाने यत्तदस्य योगस्य मूर्द्धाभिषिक्तमुदाहरण तदपि सगृहीत भवति । कि पुनस्तत । पद्वा म्ह्येति ॥

४ अ १ । पा १ । सू ६७ ॥ ५ अ १ । पा १ । सू ६६ ॥

६ स्वरग्रहणाच्च । क । ग ॥

[1]सम्बन्धसामान्ये इति । (कै)

न तु कर्मणीत्यर्थ । तेन सर्वलक्ष्यसिद्धिरिति भाव ॥ भाष्ये

पूर्वं स्यादिति । (भा)

पूर्वो न स्यादित्यस्याप्युपलक्षणम । तदाह

स्वाश्रयनिवारणार्थमिति । (कै)

एव च प्रकृतसूत्रे उभयोरपि ग्रहण बोध्यम ॥ कैयटे

---

१ अय विधिशब्दोऽस्त्येव कर्मसाधनो विधीयते विधिरिति । अस्ति भावसाधन । विधान विधिरिति । तत्र कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्ट सगृहीतमिति कृत्वा भावसाधनस्य विधिशब्दस्योपादान विज्ञास्यते । पूर्वस्य विधान प्रति पूर्वस्य भाव प्रति पूर्व स्यादिति स्थानिवद्भवतीत्येवमाट भविष्यतीट च न भविष्यति । दध्यत्र । मध्वत्र । चक्रतु । चक्रु । इति परिहार वक्ष्यति । कानि पुनरस्य योगस्य प्रयोजनानि ।

स्तोष्याम्यह पादिकमौदवाहि
तत श्वोभूते शातनी पातनी च ।
नेतारावागच्छत धारणि रावणि च
ततः पश्चात स्रस्यते ध्वस्यते च ॥

स्तोष्यामीति । कथयिष्यामीत्यर्थं ॥ पादिकमिति । पादोऽस्यास्तीति ठन् । दीव्यत्यादिषु वार्थेषु ठक । चरत्यर्थे तु पदिक इत्येव भवति पर्पादित्वात् । 'पद्भावे इके चरतावुपसख्यानम्" ( पद्यत्यतदर्थे । ६ । ३ । ५३ । एतत सूत्रस्य वार्तिकम् ) इति पद्भाव ॥ उदक वहतीत्यण् । सज्ञायामुदभावः । अपत्ये इञ् ॥ श्वोभूतिर्नाम शिष्य । तस्याऽऽमन्त्रणम् ॥ शातनपातनशब्दाभ्या गौरादित्वाङ् ङीष् ॥ नेताराविति । शिष्ययोरामन्त्रणम् । नयेते गुरुमुखात् शास्त्रार्थमिति नेतारौ ॥ धारणरावणशब्दाभ्यामिञ ॥

भावसाधन एवेति । (कै)

एव शब्दोऽप्यर्थ इति केचित । न पदान्त इति सूत्रे एतत-स्फुट वक्ष्यते ॥ भाष्ये

परिहार वक्ष्यतीति । (भा)

दध्यत्रेत्यत्र यण प्रतिषेधारम्भ चक्रतुरित्यादौ [१] द्विवचने-ऽचीति ॥

चरत्यर्थे इति । (कै)

[१] पङ्क्तावे इके चरतौ इत्युपसख्यानादितिभाव ॥

[२]गौरादित्वादिति । (कै)

शदेर्ण्यन्ताद्युजितिभाव । टिलान्ङीविति सप्तमे आकर । शातनीमित्यादा वल्लोपो न इत्यल्लोपप्राप्ति । धारणिमित्यादौ धृरुभ्या ण्यन्ताभ्या ल्युटि णत्वस्यासिद्धत्वात [४] नस्तद्धित इत्यस्य प्राप्ति ॥ भाष्ये

[५]यजादिभ्यो विहित इति । (भा)

एव च वच्यादिभ्यो ण्यन्तेभ्य क्विपि सप्रसारण न भवत्येव । क्विवभाव एवेत्यन्ये ॥

नित्यादपीति । (कै)

[६] 'नाजानन्तर्ये इति निषेधस्तु अनित्यो नास्त्येव वेति भाष्या-

---

१ अ १ । पा १ । सू ५९ ॥

२ पद्यत्यतदर्थे । ६ । ३ । ५३ । एतत सूत्रस्थवार्त्तिकम् ॥

३ षिद्गौरादिभ्यश्च । ४ । १ । ४१ ॥

४ अ ६ । पा ४ । सू १४४ ॥ ५ अ ६ । पा १ । सू १५ ॥

६ नाजानन्तर्ये बहिष्ट्वप्रकॢप्ति । ५१ परिभाषेन्दुशे-॥

श्रय । पूर्वनिमित्तकार्य्यत्वम अत्रान्तरङ्गत्व विवक्षितम् ॥ उदा-हरणत्ववादी आह । भाष्ये

[1]अनेनाऽपीति ॥ (भा)

सति स्थानिवत्त्वे इति । (कै)

एव च द्वयोरपि नित्यत्वेनोच्चारणक्रमे प्राथम्यात पूर्वं पूर्वयणा-देश एवेति भाव ॥ [2] इतर । उदाहरणत्वखण्डनवादी ॥

शब्दपरेति । (कै)

उच्चारणक्रमीयप्राथम्यस्य शास्त्रेण बाध इति भाव । ततसूत्रे व्यक्तिन्यायेन सूत्रपाठत शब्दतश्चोभयविधमपि परत्व गृह्यत इति तात्पर्य्यम् ॥ नन्वेव कार्य्यपरमित्युच्यते तत्कथमभेदे स्यादत आह

एकमपीति । (कै)

व्यक्तिपक्षे प्रतिलक्ष्य लक्षणभेदादिति भाव ॥ विषयगत पौर्वा-पर्य्यं तदवच्छिन्ने लक्षणे आरोप्यत इत्यत्र तात्पर्य्यम । विप्रतिषेध-शास्त्रप्रवृत्तियोग्य 'नचास्ति यौगपद्येनेति' भाष्यबोधित विरोधमुप-पादयति ।

एकस्य चेति । (कै)

प्रसङ्गे आदेशविधानादादेशसमये स्थानिनोऽसत्त्व निमित्तत्व

---

१ अनेनाऽपि सिद्ध स्वर । कथम ।

आरभ्यमाणो नित्योऽसौ परश्चाऽसौ व्यवस्थया ।

युगपत् सम्भवो नास्ति बहिरङ्गेण सिध्यति ॥

२ कैयटे । इतर आह ॥

व सत्वे सत्वाऽसत्वे चैकच युगपद विरुद्धे। एव च द्वयोयणोर्योग
पद्याऽसम्भव इति भाव ॥ भाष्ये

बहिरङ्गेण सिद्धतीति। (भा)

तेनैव कार्य्येति सिध्यति न सूत्रेणेत्यथ । एव च शब्दत परत्व-
मादाय विप्रतिषेधसूत्रस्य नैव प्रवृत्तिरिति तात्पर्य्यम । उदाहरण-
वादी अन्तरङ्गपरिभाषाऽऽश्रयण विनापि स्वर साधयति भाष्ये

एव तर्ह्णीति ॥ (भा)

[1]स्वरविधाविति। (भा)

अस्य स्वरोद्देश्यकविधित्वादिति भाव ॥

[2]अवश्यमेवेति। (भा)

एव च तथैव सिद्धत्वान्नैतदस्या [3]उदाहरणमिति भाव ॥

सा चाप्येषेति। (भा)

प्रकृतोदाहरणविषयपूर्वनिमित्तकमन्तरङ्गमित्यशो न्यायसिद्ध

---

१ स्वरविधौ व्यञ्जनमविद्यमानवद्भवतीति नाऽस्ति व्यवधानम। सा तर्हि एषा परिभाषा कर्त्तव्या ॥

२ ननु चेयमपि कर्त्तव्या असिद्ध बहिरङ्गलक्षणमन्तरङ्गलक्षणे इति। बह्वप्रयोजनैषा परिभाषा। *अवश्यमेवैषा कर्त्तव्या। साचाऽप्येषा लोकत सिद्धा। कथम। प्रत्यङ्गवर्त्ती लोको लक्ष्यते। तद्यथा। पुरुषोऽय प्रातरुत्थाय यान्यस्य प्रतिशरीर कार्य्याणि तानि तावत करोति तत सुहृदा तत सम्बन्धिनाम् ॥

३ अस्योदाहरणम। सम ॥

---

* अवश्यमेषा कर्त्तव्या। ग। क। किल्हरणमुद्रापितभाष्यपुस्तकेऽपि ॥

इति तदनाश्रयणमशक्यमिति भाव ॥ ननु प्रत्यवयववर्त्ती लोकरूपोऽवयवी लक्ष्यत इति नाथ प्रकृतानुपयोगादित्यत आह

प्रत्यासन्नेति ॥ (कै)

अङ्गानामिति । (कै)

अङ्गिन प्रतीतिशेष ॥

अङ्गमङ्गमिति । (कै)

प्रत्यासन्नवर्त्ती तत्कार्य्याभिनिविष्टो लोको दृश्यत इति भाव । प्रत्यासन्नत्व च प्रथमोपस्थितत्वरूपम् ॥ भाष्ये शरीर प्रतीत्यन्वय । प्रतियोगे द्वितीया ॥ भोग सुखादिसाचात्कार ॥ आसत्ति" प्रथमोपस्थिति । युगपदुपस्थिताविदम् । क्रमेणोपस्थितावपि आसत्तिवशादेव पूर्वं सुहृदामुपस्थितिरिति बोध्यम् ॥ ननु अन्वितस्य वाक्यार्थेन योगो भवतीत्ययुक्त शब्दार्थसम्बन्धस्य नित्यत्वात शब्दस्य विरम्यव्यापाराभावाद् युगपदेव सकलार्थप्रतीते क्रमाभिधानमप्यसगतमितत आह

नित्येऽपीति ॥ (कै)

[1]असत्त्वमपीति । (कै)

असत्यमपीति पाठान्तरम् । शब्दजन्यबोधे वस्तुगत्याऽसत्त्वादित्यर्थ । कि तु शास्त्रवासना कल्पितोऽय प्रक्रियाद्शाया क्रम । अथवदुद्देश्यकप्रातिपदिकसञ्ज्ञोद्देश्यकडीबाद्युद्देशेन शास्त्रे स्वादिविधानादिति बोध्यम् ॥ वस्तुत प्रकृतितदर्थावश्यसत्यमेव कुतस्तत् क्रमेऽस्य सत्यतेत्यत आह

---

१ "असत्यमपीति" इतिपाठ स पुस्तके ॥

प्रकृत्याद्यर्थं चेति॥ (कै)

असत्यमपीत्यनुकृष्यते॥ भाष्ये

सामान्यभूतेऽर्थे वर्त्तत इति। (भा)

वर्त्तन नाम सामान्याभिधानम्॥

विशिष्ये। (कै)

विशेषणविशिष्टे तदैव विशेष्यत्वात। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति भाव॥

तदनुरक्तेति। (कै)

सामान्यस्य कार्य्यानहत्वाद्व्यक्तिस्तदाश्रयतया शब्दार्थत्वेन कल्प्यत इति भाव॥ भाष्ये

उपजायत (भा)

इत्यस्य वोधविषयो भवतीत्यथ॥

व्यक्तस्येति। (भा)

द्रव्यस्य सतो बुद्ध्यारूढस्येत्यथ॥

तत्पूर्वमिति। (कै)

आश्रयप्रतीत्युत्तरमेव तदाकाङ्क्षणादिति भाव॥

वस्त्वन्तरेति। (कै)

स्वसमवायिकारणनानावस्त्वपेक्षयेत्यथ॥ एकत्वस्य तस्याऽभावादाह

एकत्वेति। (कै)

एव च प्रयोजनाऽपेक्षया सापि वहिरङ्गेत्यथ॥

सजातीयेति । (कै)

द्रव्यत्वेन स्वाश्रयत्वेन वा सजातीयत्वम् ॥ ननु लिङ्गादिभिरेकार्थसमवायाविशेषात् कथ शक्तेर्बाह्यत्वमत आह

कर्मादीनि त्विति ॥ (कै)

न्यायप्राप्त क्रम इति । (कै)

शास्त्रकल्पितन्यायप्राप्त प्रक्रियादशायामित्यर्थ । अनेन विशिष्टबुद्धौ विशेषणज्ञानकारणत्वाद्यपि तान्त्रिककल्पितमिति सूचितम् ॥ भाष्ये

यथैवेति । (भा)

अर्थाना लिङ्गसख्याकारकाणाम् ॥ 'प्रादुर्भावो' ज्ञानम् ॥ 'शब्दानामपि तद्बोधकस्त्रीप्रत्ययविभक्तीनामपि । अस्य प्रादुर्भाव इति शेष ॥ 'तद्वत्कार्य्यैरपी त्यस्य तथैवानुपूर्व्येत्यर्थ । येन क्रमेण-शब्दोपस्थितिस्तेनैव क्रमेणकार्य्यमितिपूर्वमीकारनिमित्तको यणिति भाव । तत्र पदस्यैव विभज्यान्वाख्याने सर्वेषा युगपत्प्राप्तावनया-व्यवस्था । क्रमेणान्वाख्याने तु पूर्वप्रवृत्तिकत्वरूपमन्तरङ्गत्व [1]'पूर्वयणादेशस्य परयणादेशस्य बहिरङ्गत्व तु निमित्ताभावादप्राप्तत्वरूप बोध्यम् । अत एव वाय्वोरित्यत्र नासिद्धत्वम् । एव विधान्तरङ्गत्वस्य दृष्टान्तादिवत्त्वेन युगपत्प्राप्तिविषयत्वात् । स्पष्ट चेद [2]"वाहऊठ्" सूत्रे कैयटे । यत्तनयारीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति । तदयुक्तम् । अन्तरङ्गशब्दार्थाभावात् । अङ्गशब्दस्य तत्र निमित्तपरत्वात् ॥

---

१ पूर्वयणादेशस्य बोध्यम् । असिद्धत्व परयणादेशस्य निमित्ताभावाद्-
-। क । ग ॥ २ अ ६ । पा ४ । सू १३२ ॥

अवधीदिति । (भा)

यद्यपि [1] अतो लोप इत्यत्र [2] आर्धधातुक इति विषयसप्तमीति [3] 'अचोयद्' इति सूत्रस्थभाष्यादतोयत इत्यपरनिमित्तकत्वात्कथं स्थानिवत्त्वं तथापि विषयसप्तमीत्वेऽपि परबुद्धिनिमित्तकत्वेन परनिमित्तकत्वमस्त्येवेत्याशय । स्वतन्त्रवधधातुस्तु नास्त्येव अदन्तत्वे [4] जनिवध्योश्चे ति वधिग्रहणमपि न कर्त्तव्यमेवेति बोध्यम् ॥

बहुखट्वक इति (भा)

भाष्ये । [5] 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्युक्तेरिति भाव ॥

नन्वादेशस्य सत्त्वादनादिष्टादित्यनुचितमत आह

अकृत एवेति । (कै)

उपलक्षणमेतदिति भाव ॥ ननु सूत्रेऽनादिष्टादित्येतदनुपादानात्कथमेतल्लाभोऽत आह

[6]अजपेक्ष्येति । (कै)

लक्ष्यानुरोधादिति भाव ॥ कर्मणि क्ते अनादिश्यमानादित्यर्थ स्यादत आह

आदेशनमिति । (कै)

बहुव्रीहौ [7] 'निष्ठेति' पूर्वनिपातस्तु न । तत्प्रकरणानित्यत्वात ॥

नन्वत्र पूर्वत्वविज्ञाने आदेशेन पूर्वत्वस्याऽविशेषणात्तद्यर्थेत्ययुक्तमत आह

---

१ अ ६ । पा ४ । सू ४८ ॥ २ अ ६ । पा ४ । सू ४६ ॥
३ अ ३ । पा १ । सू ६३ ॥ ४ अ ७ । पा ३ । सू ३५ ॥
५ अ ६ । पा २ । सू १७५ ॥ ६ अजपेक्षस्येति पाठ कैयटेऽस्ति ॥
७ अ २ । पा २ । सू ३६ ॥

यथेति । (कै)

परमतेन दृष्टान्त इतिभाव ॥ पूर्वविध्यभावादाह

धिन्वन्तीति । (कै)

अन्यथेडापत्तिरिति भाव । अत्र यद्वक्तव्य तदुक्तम ॥ पञ्चमी-समासाश्रयेण वैयाकरणे दोषमाशङ्क्याह

वैयाकरणेति । (कै)

[1]ऐज्विधानसामर्थ्यात् तत्र न भवति स्थानिवत्त्वमितिपरे ॥ विधिग्रहण स्थाश्रयनिवृत्त्यर्थमित्युक्तत्वात्तत्रादेशलक्षणेत्यसगतमत आह

भाष्यकारेण त्विति । (कै)

इद वार्त्तिकमिति न विरोध इति भाव ॥

निवर्त्यत इति । (कै)

उत्सृज्यते निवर्त्तते इत्युत्सर्ग इति भाव ॥

नत्वानन्तर्य्यं इति । (कै)

पूर्वविधावित्युक्ते शास्त्रीये कार्य्येऽतिदेशप्रवृत्तिरिति भाव ॥

---

१ न य्वाभ्या पदान्ताभ्या पूर्वौ तु ताभ्यामैच । ७ । ३ । ३ । अनेनैजागम । अत्राह भगवान् महाभाष्यकारः ।

य्वाभ्या परस्यावृद्धित्वमपवादौ वृद्धेर्हि तौ ।
नित्यावैचौ तयोर्वृद्धि किमर्थं नेति पिष्यते । १ ॥
यत्र य्वाभ्यां परावृद्धिस्तत्राप्यश्वेयथा न तौ ।
अचामादेर्य्वाभ्या हि तौ कथ द्याग्यौतिके न तौ । २ ॥
यत्र वृद्धिरचामादेस्तत्रैवावत्र योर्हि सा ।
अथ कस्मात्पदान्ताभ्या यथेयो न भवेद्यथा । ३ ॥

**प्रयोगे इति।** (कै)

उच्चारणे इत्यर्थ ॥ भाष्य

**[1]न हि देवदत्तस्येति।** (भा)

हतेऽपि न जीवन चेत् किं वक्तव्य तदारोप इत्यर्थ ॥

**[2]उक्तं वेति।** (भा)

[3] षत्वतुकोरि त्यत्र वचनद्वयकरणाऽपेक्षो विकल्प ॥

**तदेव नामेति।** (भा)

[4]"इको यणचि" इत्यस्मिन्नित्यर्थ ॥ चिणो लुकि तग्रहणाभावे किं ततरामृशब्दस्य लुगुच्यते उत तेषा क्रमेण। नाद्य । सघातस्याप्रत्ययत्वात। नान्त्य इत्याह भाष्ये

**[5]तलोपस्य चेति॥** (भा)

---

१ नह्यन्यस्याऽसिद्धत्वादन्यस्य प्रादुर्भावो भवति। तद्यथा। नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति ॥ तस्मात स्थानिवद्वचनमसिद्धत्व च। वा ॥

२ किमुक्तम। स्थानिवद्वचनानर्थक्य शास्त्राऽसिद्धत्वात। वा। स्थानिवद्वचनमनर्थकम। किं कारणम। शास्त्राऽसिद्धत्वात। नानेन कार्य्यासिद्धत्व क्रियते। किं तर्हि। शास्त्राऽसिद्धत्वमनेन क्रियते। एकादेशशास्त्र तुक्शास्त्रेऽसिद्ध भवतीति ॥

३ अ ६। पा १। सू ८६॥ ४ अ ६। पा १। सू ७७॥

५ चिणो लुकि तग्रहणानर्थक्य सघातस्याप्रत्ययत्वात। वा॥ तलोपस्य चासिद्धत्वात्। वा॥ चिणो लुक। ६। ४। १ ४। एतत सूत्रस्य वार्त्तिकमिति ॥

एवमसिद्धवचनमात्रेण निर्वाहमुक्त्वा सूत्रकृत स्थानिवत्त्व समर्थयति

[1]काममिति ॥ (भा)

नह्यभावेति । (कै)

इह" इत्यस्य सूत्रे इत्यर्थ इति भाव ॥ ननु पूर्वमस्यार्थस्य विधिशब्देन साधितत्वात्कथ तत्करणरूपो न भार इत्यत आह

विधिशब्द चेति । (कै)

अध्याहारमात्रेणेति भाव ॥ भाष्ये

एवमादेशेऽपि न भवतीति । (भा)

आदेशनिमित्तकोऽपीत्यर्थ ॥ यद्यपि व्यवहितेऽपि पूर्वशब्दो वर्त्तत इति भाष्यकृता पूर्वमेवोक्त तथापि तदर्थप्रतिपादकवार्त्तिक-मवतारयितु पृच्छति भाष्ये

किं पुनरिति ॥ (भा)

अव्यवहितसम्भवे इति । (कै)

[2]"छन्दसि परेऽपि' [3] व्यवहिताश्च" इत्यनेन पूर्वपरशब्दयोर-

---

१ काममतिदिश्यता वा सच्चासच्चापि नेह भारोऽस्ति ।
कल्प्यो हि वाक्यशेषो वाक्य वक्त्रध*धीन हि ॥
अथवा वतिनिर्देशोऽय कामचारश्च वतिनिर्देशो वाक्यशेष समर्थयितुम् । तद्यथा । उशीनरवन्मद्रेषु यवा । सन्ति न सन्तीति । मातृवदस्या कलाः । सन्ति न सन्तीति ॥

२।३ छन्दसि परव्यवहितवचन च । इति वार्त्तिकमुक्त्वा "छन्दसि परेऽपि व्यवहिताश्च (१।४।८१।८२।) इति वक्तव्यम्" इत्युक्त भगवता ॥

---

* अधीनमिति । अध्युत्तरपदात् खविधानाद् आयत्तार्थवाचि अधीनशब्द ॥

व्यवहितार्थे मुख्यत्वबोधनादिति भाव ॥ [1]'तस्मिन्' इति सूत्रे निर्दिष्टग्रहणाद्व्यवहिताव्यवहितसाधारणे पूर्वशब्दस्य शक्ति । अन्यथात् पूर्वमानयेत्यादि तु तात्पर्य्याऽनुपपत्त्या विशेषे लक्षणा 'छन्दसि परेऽपि' इत्यादौ तु पराङ्गविकलाया [2]'तस्माद्' इति परिभाषाया उपस्थितेरव्यवधानाशलाभ इह तु परे ग्रहणाल्लिङ्गात्तदनुपस्थितिरितितत्त्वम् ॥ भाष्ये एकाननुदात्तशब्देन तत्प्रयुक्त शेषनिघात ॥

## उदात्तत्वमिति । (कै)

प्रत्ययस्वरेण ॥

## निघातप्रतिषेधेति । (कै)

[3]'निपातैर्यद्यदि' इत्यनेनेतिभाव ॥

## अनाश्रित्येति । (कै)

पदसंस्कारे वाक्यसंस्कारे वा यणो वर्णाश्रयत्वेनान्तरङ्गत्वमित्यन्ये ॥

## श्लेष्माऽग्न इति । (भा)

[4]'अमनुष्यकर्त्तृके च' इति ठक् ॥ ननु संयोगत्वस्य समुदायगतत्वेन पूर्वविधित्वाभावात कथ स्थानिवत्त्व, किं च न संयोगसंज्ञा व्यवहितस्य विधिरव्यवहितस्य [5]सत्त्वादत आह

---

१ अ १ । पा १ । सू ६६ ॥ २ अ १ । पा १ । सू ६७ ॥

३ निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । ८ । १ । ३ । एतै निपातैर्युक्त न निहन्यते । "यदग्ने स्यामहत्वम' । 'युवा यदी कृथ" । "कुविदङ्ग आसन" । "अचित्तिभिश्चकृमा कच्चित' । पञ्चासो यत्र पितरो भवन्ति" ॥

४ अ ४ । पा २ । सू ५३ ॥ ५ घस्य सत्त्वाद — । क । ग ॥

कार्य्यार्थत्वादिति । (कै)

ततश्च श्रुतद्वारा व्यवहितपूर्वविधित्व सज्ञाया इति भाव ॥ ननु च उक्तहेतुना व्यवहितपूर्वविधित्वात् कथमनन्तरग्रहणे सयोगसज्ञाया विधेयत्वमत आह

[1]यथोद्देशेति । (कै)

तदा कार्य्यपर्य्यालोचन विनापि भविष्यति । कि चिदित्यभि सन्धिमात्रात तत्प्रवृत्तेरित्यर्थ ॥ ननु एवमपि पूर्वपरविधित्वात्र-स्थानिवत्त्वप्राप्तिरत आह

प्रत्येक चेति ॥ (कै)

समुदाय इति । (कै)

एव चानन्तर्य्याऽऽश्रयणे यथोद्देशपक्षेऽपि न दोष इति भाव ॥ एव च पूर्वमात्रग्रहणेऽपि स्लेश्चा२ प्ले न दोष । यथोद्देशाऽऽश्रयणादेव कार्य्यकालपक्षेऽपि यत्प्रतिबन्धद्वारा स्थानिवत्त्वस्य सज्ञाकार्य्यप्रतिबन्धकत्व तस्य पूर्वमात्रवृत्तित्वे एव स्थानिवत्त्वमिति गूढतात्पर्य्यम् ॥ भाष्ये

कि तर्हि पूर्वपरविधिरिति । (भा)

पूर्वपरविधौ स्थानिवत्त्वाभावादेव च आरतुरित्यादौ [2]"ऋच्छत्यृताम्' इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमिति बोध्यम् । विधिग्रहणसामर्थ्याच्चैतदर्थलाभ इत्याहु ॥

---

१ यथोद्देश सज्ञापरिभाषम् । परिभाषेन्दुशे—२ ॥

२ अ ७ । पा ४ । सू ११ ॥

**पूर्वमात्रेति । (कै)**

दीर्घादिग्रहणाल्लिङ्गादिति भाव ॥ ननूभयनिमित्तत्वेऽपि पर-निमित्तत्वमस्त्येवेत्यत आह

**परस्मिन्नितीति ॥ (कै)**

**अवधारणार्थमिति । (कै)**

पूर्वविधिशब्दे पूर्वशब्दस्येवास्यापि विशेषणस्यान्ययोगव्यवच्छेद-फलकत्वादिति भाव ॥

**लभ्यत एवेति । (कै)**

अविशेषात्सर्वत्र प्रवृत्त्येतिभाव । आयसावित्यत्र [1] देविका शिंशपा इत्यालम ॥

**तस्यादिवद्भावादिति । (कै)**

ननु आदिवद्भावे नौ इत्यस्य सर्वनामस्थानत्वेऽपि आयस् इत्यस्याङ्गत्वाभावात कथ नुम् । औ इत्यस्य साक्षाद्विहितत्वात आयस् इत्यस्य षष्ठीनिर्दिष्टादेशत्वाभावाच्च स्थानिवत्त्वेन तस्याङ्गत्व-मितिचेन्न । छिन्नपुच्छश्ववद एकदेशविकृतानन्यत्वेनाङ्गत्वप्रतीत्य-व्याघातात । भूयोऽवयवसाम्यात । लोकन्यायसिद्धस्यानाश्रयणे बीजा-भावात । सूत्रमपि वक्तसाध्यमावश्यकमिति दिक् ॥ भाष्ये

**न सिध्यन्तीति । (भा)**

निवर्त्यत्वेनेत्यर्थ ॥ ननु अच इत्यस्य विशेषणस्यान्ययोगव्यव-च्छेदकत्वेऽपि हला व्यावृत्ति स्यान्नाजन्तरस्येत्यत आह

---

[1] अ ७ । पा ३ । सू १ ॥

गुणत्वादिति। (कै)

आदेशविशेषणत्वेनेतिशेष । वस्तुतोऽचोरादेशस्याच्त्वपर्य्याप्त्यधिकरणादेशत्वाभाव इति भाष्याशय ॥ उभयनिमित्तत्वे किं परनिमित्तत्वमेव नास्तीत्युच्यते उत परमेव निमित्तं नेति। नाद्य इत्याह

अन्वयेति ॥ (कै)

नान्त्य इत्याह

अयोगेति। (कै)

विशेष्यसङ्गत एवायोगव्यवच्छेदबोध इति नियमे न मानमिति भाव ॥ भाष्ये

अथ हल्चोरिति। (भा)

अच' इत्यपि परस्मिन्निति वदयोगव्यवच्छेदकमुतान्ययोगव्यवच्छेदकमिति प्रश्न ॥

अत्यरराजदिति। (कै)

राजानमतिक्रान्तवानित्यर्थ । [१] प्रातिपदिकाद्धात्वर्थे' इति णिजिष्ठवद्भावाट्टिलोपस्थति बोध्यम्। पूर्वस्य विधौ इत्यनाश्रित्येदम् ॥ भाष्ये

एकादेश इति। (भा)

[२] अतो गुणे" इति पररूपमित्यर्थ ॥ "यस्येति च" इति तु न। तिलोपस्याभीयत्त्वेनासिद्धत्वादिति भाव ॥

---

१ प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। गण – सू ॥

२ अ ६। पा १। सू ९७ ॥

**विंश शतम्** (भा)

इत्यस्य विंशतिरधिकास्मिन् इत्यर्थ ॥ 'विंश इति तु प्रक्षिप्त शतसहस्रयोरेव डस्येष्टत्वात ॥

**स्थानिनो ऽनादिष्टादिति ॥** (कै)

अत्र यद्वक्तव्य तद्[1] न धातु इति सूत्रे स्थानिवत सूत्रेचोक्तम ॥ कैकेयादौ[2] केकयमित्रयु इत्यादिना इयादेशे[3] आद्गुण । अत्रापि पचे स एवार्थ इत्यत आह

**परिहारान्तरस्येति ।** (कै)

पचान्तरस्येत्यथ । एतत पूर्वोक्तम् ॥

**लोपस्येति ।** (कै)

समानाधिकरणेन सुपेत्यधिकारात्परसन्निधाने जायमानत्वेन परनिमित्तत्वमित्यभिमान । वस्तुत एतावता परनिमित्तत्वे [4]पादशतस्य इति लोपस्य परसन्नियोगेन विधीयमानस्य परनिमित्तत्वापत्ति । इदमपि चिन्त्यम् । परिहारान्तरस्येत्येवात्रापि समाधिरिति तत्त्वम् ॥

**उपादानादिति ।** (कै)

यद्यप्यागत्येत्येतद्वारणायमावश्यक तत तत्र हि केवलहलो लोपस्तथापि व्याख्यानादच एवादेश इत्यन्ययोगव्यवच्छेदलाभ इति बोध्यम् ॥

---

१ अ १। पा १। सू ४॥ २ अ ७। पा ३। सू २॥
३ अ ६। पा १। सू ८७॥ ४ अ ५। पा ४। सू १॥

## साक्षादेवेति । (कै)

अचो यत्र स्थानषष्ठीनिर्दिष्टत्वमित्यर्थ । एव हि णिलोपस्य स्थानिवत्त्व न स्यात्तस्मादच एवादेश प्रयोगे यच्चेत्यर्थेन तदारणमुचितम् ॥

## कि पुनरिति । (भा)

आश्रितस्थानिककार्य्यमेव स्थानिवद्भावेन प्राप्यते उत अनाश्रितस्थानिक प्रतिवध्यतेऽपीतिप्रश्न । यद्यप्यय विचार प्राक कृत एव भावाऽभावातिदेश इति सिद्धान्तश्च कृतस्तथापि अन्यवार्त्तिककारकृतवार्त्तिकव्याख्यानमिदमिति बोध्यम ॥ ननु सयोगसञ्ज्ञेतिवक्तव्ये किमुच्यते गुरुविधिरिति अत आह

## कार्य्यैति ॥ (कै)

नन्वचि नेत्यर्थाद द्विवचननिषेधेऽस्येव स्थान्याश्रयणमत आह

## पर्य्युदासेति । (कै)

चिन्त्यमेतत । वाक वाक्क् इत्यादाववसाने द्वित्वाऽनापत्ते । हलीत्येव वक्तु युक्तत्वान्नेत्याऊ । तस्मादज्भिन्नस्याश्रयण नलच इति वक्तु युक्तम् । वागित्यादावज्भिन्नो वर्णाऽभाव एवेति न दोष ॥

## यड एवेति । (कै)

एव सति पचद्वयेऽपि "वरे" ग्रहण न कार्य्यमित्यच तत्करणकथन चिन्त्यमेव स्यात् । कि च तार्किकप्रत्ययलमादायाऽपि प्रवृत्तिज्ञापनाय तदावश्यकमिति चिन्त्यम्। वरे यलोपेत्येकमेव निमित्तमित्यभिमानेन भाष्यमित्यन्ये ॥

**क्सस्येति । (कै)**

[1]'क्सस्याऽचि' इति क्सलोपे कृतेऽपि [2]लुग्वक्तव्य इति वार्त्तिकार्थ । पक्षान्तरे तु क्सलोपेनैव सिद्धमित्यभिमान ॥ तत्राऽप्यवश्य लुग्वक्तव्य इत्याह

**अदुग्धीति ॥ (कै)**

भाष्ये

**[3]घ्नन्तीत्यादि । (भा)**

[4] गमहन इत्यनेनाऽल्लोप । घत्वम् । [5] हो हन्ते इत्यनेन ॥

भाष्ये

**[6]जग्ध्यादिष्वादेशस्येति । (भा)**

जग्ध्यादिषु विषयेषु आदेशस्यार्थात्तद्रूपस्येत्यथ ॥

**एकदेशविकृतस्येति । (कै)**

अन्तरङ्गत्वाद्वृद्धौ कृतायां णिलोप इति आदित्यस्यानादिष्टादच

---

१ अ ७ । पा ३ । सू ७२ ॥

२ कसलोपे लुग्वच.म । वा । कसलोपे लुग्वक्तव्य ॥

३ हन्तेघत्वम । वा । हन्तेश्च घत्व वक्तव्यम । घ्नन्ति । घ्नन्तु । अघ्नन । अस्तु तर्ह्याश्रीयमाणाया प्रकृताविति ॥

४ अ ६ । पा ४ । सू ९८ ॥ ५ अ ७ । पा ३ । सू ५४ ॥

६ ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेध । वा । ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशस्य प्रतिषेधो वक्तव्य । निराद्य । समाद्य । 'अदो जग्धिर्ल्यप्ति किति (२ । ४ । ३६) इति जग्धि भाव प्राप्नोति ॥

पूर्वत्वमस्त्येव । [1] 'य्वल्लोपौ' इति तु णिच्स्थानिकटष्ह्यादेर्बाधकम । उक्तरीत्या वा तस्य तत्त्वम् ॥ वार्त्तिके

[2]युलोपेति । (भा)

यकारोकारयोर्लोप इत्यर्थ ॥ अकुर्व्यामित्यादौ वाक्यसंस्कारपक्षे परस्य यणादेशे तत तत कार्य्यप्राप्तिरिति बोध्यम् ॥

बहिरङ्गेति । (कै)

वाय्वोरित्यत्र यथाऽस्य न प्राप्तिस्तथोक्तमेवमन्यत्राऽपि बोध्यम् ॥

आत्मने पदमिति । (कै)

ङिविति शेष ॥ नन्वणन्त सौर्य्य इत्येवोदाह्रियतामत आह

सौर्य्ये इत्यत्रेति ॥ (कै)

यस्येतिचेत्यादाविति । (कै)

आदिना [3] 'सूर्य्यतिष्ये'ति यलोप ॥ [4] ष्या" ष्यप्रत्यये । अल्लोपस्यासिद्धत्वन्तु न व्याश्रयत्वात । गार्ग्यीभ्याम्' इत्यत्र गार्ग्यआभ्यामितिस्थिते पूर्वं [5]'सुपि च' इति दीर्घे यलोपाप्राप्तिरिति बोध्यम् ॥

पर्य्युदासाश्रयणे त्विति । (कै)

अङ्गित्वेन प्रकृत्याऽऽश्रयणात् स्थानिवत्त्वप्रवृत्त्या अङ्गित्वसत्त्वेन यलोप इति भाव ॥

---

१ य्वल्लोपावियङ्यणगुणवृद्धिदीर्घत्वेभ्य पूर्वविप्रतिषिद्धम् । वा । ६ । ४ । ४८॥

२ यणादेशे युलोपेत्वानुनासिकात्वप्रतिषेध । वा ॥

३ अ ६ । पा ४ । सू १४९ ॥ ४ औङः ष्या प्रतिषेधो वक्तव्यः । वा ॥

५ अ ७ । पा ३ । सू १ २ ॥

सयोगसञ्ज्ञाया इति। (कै)

अस्याशय उक्त। वस्तुत स्तुतस्य त्रैपादिकत्वात्[1] पूर्वत्रासिद्धे न स्थानिवत इत्यनेनापि सुसाधम॥

अत एव लिङ्गादिति। (कै)

न च पुत्रमासमन्तादत्तु शील यस्या पुत्रादिनीत्यादौ स्थानिवत्त्वा[2] न्नादिनी त्यस्याप्रवृत्तौ द्वित्व प्राप्नोति तद्वारणाय द्विवचनग्रहण कथमभावातिदेशे ज्ञापकमिति वाच्यम्। एतद् भाष्यप्रामाण्येन तस्यानभिधानात। शीलोपस्थितिकत्वेनाङ्रहितादिनीशब्दस्यैव तत्र ग्रहणाच्चेतिदिक्॥

---

# न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चविधिषु।१।१।५८॥

ननु स्थानिवत्त्वनिषेध विना सस्य पदान्तत्वेनाऽसिद्धेस्तस्य रुत्वसम्पादके पदत्वे स्थानिवत्त्वस्य दुर्वारत्वात सान्तस्य पदत्वाभावेन कथमत्र रुत्वप्राप्तिरत आह

---

१ पूर्वत्रासिद्धे च। वा। (१।१।५८)॥

२ अ ८। पा ४। सू ४८॥

[1]भावेति । (कै)

पदान्तेति च भावप्रधानो निर्देश इत्यपि बोध्यम । इद चिन्त्यम । द्विवचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात । भाष्य त्वेव व्याख्येयम् । रुत्वस्य पदचरमावयवत्वेन तत्र कर्त्तव्ये तन्निष्पादकपदत्वे च कर्त्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्त्वनिषेधाद्रुत्व प्राप्नोतीत्यर्थ । यद्यपि पदसञ्ज्ञा न पदचरमावयवो नापि पदान्तस्थाने विधिस्तथापि तस्या कार्य्यार्थत्वात कार्य्यस्य च रुत्वस्य तत्त्वान्नदोष । पदचरमावयवसाधकस्यापि तत्त्वेन ग्रहणमित्याशय ॥ सिद्धान्त्येकदेश्याह

[2]भसञ्ज्ञाऽनेति । (भा)

भत्वे प्राप्तस्थानिवद्भावस्यापि सान्तनिष्ठपदत्वाऽप्रतिबन्धद्वारा रुत्वसपादकत्वेन भत्वस्यापि पदान्तग्रहणेन ग्रहणात्तत्रापि स्थानिवत्त्वनिषेध इति सान्तनिष्ठभत्वेन तन्निष्ठपदत्वबाध इति भाव । न पदान्त' सूत्रदृष्ट्या त्रिपादी तु नासिद्धा। जश्चादिग्रहणात । कैयटोक्तरीत्या पूर्वपक्षयोजनेऽस्याय भाव । भत्वे स्थानिवद्भावस्य सकारनिष्ठपदान्तत्वसम्पादकतया परम्परया भसञ्ज्ञाया अपि पदा-

---

१ वेतस्वानिति भाष्यप्रतीकमुपादाय भावसाधनविधिशब्दाश्रयेणोच्यते वेतसशब्दात" कुमुदनडवेतसेभ्यो ड्मतुप् ( ४ । २ । ८७ ) इति ड्मतुपि टिलोपे कृते स्वादौ पूर्व पदमिति पदसञ्ज्ञाया सकार पदान्तत्व प्रतिपद्यते इति पदान्ततया विधीयमानत्वात स्थानिवत्त्वनिषेधाद्रुत्वप्रसङ्ग।" इत्युक्तम् ॥

२ भसञ्ज्ञाऽत्र बाधिका भविष्यति ॥

न्तत्वसम्पादकत्वेन पदान्तत्वमिति तस्यापि निषेध इति समानावधिकत्वाङ्गत्वेन पदत्वबाध इति । [1]एव परम्परया पदान्तत्वसम्पादकस्यापि पदान्तविधिशब्देन ग्रहणे मदुक्तरीत्यैव पूर्वपक्षयोजनाऽप्युचिता ॥ ननु ड्मतुपोऽर्थान्तरेऽपि विधानात् कथ सवत्र भत्वमत आह

[2]अनभिधानादिति । (कै)

मतुशब्देन प्रसिद्धत्वाद मतुप एव ग्रहणमिति भाव ॥ तत्र पूर्वपक्ष्याह

अकारान्तमेतदिति । (भा)

साक्षात परम्परया वा पदान्तकार्यप्रतिबन्धकस्य प्रापकस्य वा निषेधे परम्परा पदान्तपदे उपस्थिते पदत्वद्वारिकैव नान्यद्वारिकेति भत्वे न निषेध इति सान्तत्वाभावात्तदप्राप्तिरिति भाव ॥ सिद्धान्त्येकदेश्याह

ननु चेति । (भा)

अत्र पदस्योद्देश्यतयैतत्साध्यपदत्ववत्समुदायान्त्यकार्ये नाय निषेध इति पदत्वेऽपि स्थानिवत्त्वात सान्तस्य पदत्वाभावेन रुत्वाभाव सिद्ध इति भाव ॥ तत्र किमपेक्षया सम्प्रतीत्यत आह

स्थानिवत्त्वनिषेधादिति । (कै)

एतत्साध्यपदत्ववतोऽत्रोद्देश्यत्वाऽसम्भव । भावसाधनेऽपि विधेयस्य

---

१ एव च । ख । ग ॥

२ तदस्मिन्नस्तीत्यनैवार्थे ड्मतुप न निवृत्तादिषु अभिधानादित्येवदाश्रित्यैतदुच्यते । अकारान्तमेतदिति भाष्ये ॥

पदचरमाऽवयवत्वं स्थानिद्वारैव वाच्यमिति स्थानिनः स्थानिवद्भावेन तत्त्वाऽभावे विधेयस्य सुतरां तदभाव इति भावः । स्थानिवत्त्वनिषेधं विना यः पदत्वेन सिद्धस्तस्य चरमावयवे कर्त्तव्य इत्यक्षरार्थः । सम्प्रतिपदशब्देन समस्तेनान्तशब्दस्य षष्ठीतत्पुरुष इति बोध्यम् । यद्यपि [1] तस्य भाव इत्यादौ तत्त्वाध्यत्वप्रत्ययान्तादेरप्युद्देश्यता तथाऽप्यत्र लक्ष्यानुरोधादेवमर्थकत्वमिति तात्पर्य्यम् ॥ पूर्वपक्षी उक्ता-माशयमजानानः सम्प्रतीति पदान्तस्य विशेषणं मन्यमान आह भाष्ये

**कर्मसाधनस्येति ।** (भा)

सम्प्रतिपदान्तस्य स्थाने विधाविति हि तदर्थः ॥

**तत्र भावसाधनस्येति ।** (भा)

कर्मसाधनत्वे हि द्विवचनादिभिः सामानाधिकरण्यं पदान्तेः वैयधिकरण्यं च स्यात् । भावसाधने पदचरमावयवद्विवचनादिकमक-विधाने इत्यर्थः । तत्र हि पदचरमावयवत्वेन सिद्धकर्मके विधाने वक्तुमशक्यं सिद्धत्वे विधानवैयर्थ्यात । एवं चाकारान्तमेतद् इति प्रतीकोक्तायुक्त्या पदत्व एव स्थानिवत्त्वनिषेधात सान्तमेव पदत्वं प्रति भत्वे तु निषेधाभावाद अकारान्तं भत्वं प्रतीतिस्यादेव रुत्व-मिति भावः ॥

**जश्त्वं प्राप्नोतीति ।** (भा)

[2] झलां जशोऽन्त इत्यस्य पदचरमावयवविधायकत्वात् । जश्-ग्रहणं तु [3] झलां जश् इति जश्त्वे तन्निषेधार्थम् ॥

---

१ अ ५। पा १। सू ११९ ॥ २ अ ८। पा २। सू ३९ ॥
३ अ ८। पा ४। सू ५३ ॥

एकादेशस्यैवेति । (कै)

अत एव उभयत आश्रये न इत्यनेन वक्ष्यमाण समाधान सगच्छते ॥ सिद्धान्त्येकदेश्याह

अस्ति पुनरिति ॥ (भा)

पूर्वपक्ष्याह

इह क्वानीति । (भा)

इह पदान्त एव यकारादिविधेय इति भावसाधनेऽपि सिद्ध-तीति भाव ॥

असाधारणमिति । (कै)

भावसाधनपक्षमात्र साध्यमित्यर्थ ॥ भाष्ये

[1]षडिकश्चाऽपीति । (भा)

अत्रैकादेशाऽल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया-ऽसिद्धत्वेन जश्त्वाप्रवृत्तिस्तदनन्तरन्त्वल्लोपस्य स्थानिवत्त्वप्रसक्तिस्तत्र

१ षडिकश्चाऽपि सिद्धो भवति । भा । षडङ्गुलिशब्दाद् बह्वचो मनुष्य नाम्नष्ठज्वा' (५ । ३ । ७८) इति टचि कृते ठाजादावूर्ध्वम" (५ । ३ । ८३) इति ङ्गुलिशब्दस्य लोपे यस्येति" (६ । ४ । १४८) लोपे षषित्यर्थ शब्दोऽन्तवर्त्तिन्या विभक्त्या सिद्ध पदत्वेनेति पदान्ततया अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावाद कारान्तस्य भसञ्ज्ञा । पदसञ्ज्ञा तु अन्तवर्त्तिविभक्त्याश्रयेण षकारान्त स्येति सिद्ध जश्त्वम । कर्मसाधने तु षष षकार पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात षकारान्तस्यैव भसञ्ज्ञेति तुल्यावधिकया भसञ्ज्ञया पदसञ्ज्ञाया एकसञ्ज्ञाधिकाराद् बाधनाज्जश्त्वासिद्धि ॥

कर्मसाधने "यस्येति" लोपे इक् निमित्तभत्वेन समासान्तवर्त्ति-विभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकासिद्धिः॥ न च भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति वाच्यम्। साक्षात् परम्परया वा पदान्तस्थानिकविधिप्रापकप्रति-बन्धकस्थानिवत्त्वस्य निषेधेन भत्वेऽपि तन्निषेधात्। पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्वारकपरम्पराया वक्तुम-शक्यत्वेनान्यद्वारिकाया अपि ग्रहणात्। भावसाधनत्वे तूपस्थितपदत्व-द्वारिकैव परम्पराऽऽगृह्यते इति भत्वे निषेधाभावेन स्थानिवत्त्वाद-कारान्ते भत्वेऽपि षान्ते पदत्वस्याव्याघातेन न दोष इत्याशयः॥ कैयटे

पदान्ततांया अविधानादिति। (कै)

पदत्वस्याविधानेन धर्मविशिष्टत्वेनाऽपि पदान्तस्याविधाना-दिति भावः॥

सिद्ध इति। (कै)

जश्त्वे कार्य्ये इति शेषः॥ सिद्धान्त्येकदेशश्चाह

वाचिकस्त्विति॥ (भा)

चकारस्येति। (कै)

वाचिकेऽपि वागाशीर्दत्तशब्दात् ठचि [१]"ठाजादौ" इति शीर्दत्त-शब्दलोपे [२]"यस्येति" लोपे पूर्वोदाहरणे डत्ववद्वापि कुत्वापत्ति-रिति भावः। एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये "कथं पुन-

१ अ ५। पा ३। सू ८३॥ २ अ ६। पा ४। सू १४८॥

रित्यादि' न ह्यत्र पूर्वत्रासिद्धीयं किंचित्कार्यं विधेयम् इत्यन्ते कैयटश्चिन्त्यः । स्फुटार्थत्वाच्च न व्याख्यातः । तथा हि । पूर्वमेव डस्य निष्पन्नत्वादित्यसङ्गतः सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः । किं च षकाररूपापत्तिर्न शास्त्रीया । पदचरमावयवस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वाद् इत्याद्यूह्यम् ॥ सिद्धान्त्याह

[1]कर्त्तव्योऽत्रेति ॥ (भा)

[2]पञ्चमे वक्ष्यमाणत्वं दर्शयति ॥

---

१ कर्त्तव्योऽत्र यत्नः । भा ॥

२ पञ्चमे ग्रीवलसुपरिविशालवरुणार्यमादीनां तृतीयात् (५ । ३ । ८४) इति सूत्रव्याख्यानावसरे उक्तं भगवता । तथाहि । "इह षडङ्गुलिः षडिकः इत्यजादिलोपे कृते पदसंज्ञा न प्राप्नोति । तत्र को दोषः । जश्त्वं न स्यात् ।

षडिके जश्त्वं उक्तम् । वा ।

किमुक्तम् । "सिद्धमचः स्थानिवत्त्वाद् (यचि भम् । १ । ४ । १८ । एतत् सूत्रस्थवार्त्तिकम्) इति ।

वाचिकादिषु पदवृत्तप्रतिषेधः । वा ।

वाचिकादिषु पदवृत्तस्य प्रतिषेधो वक्तव्यः । वागाशीर्दत्तः वाचिक इति ।

सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् । वा ।

सिद्धमेतत् । कथम् । एकाक्षरपूर्वपदानामुत्तरपदस्य लोपो वक्तव्यः । इहापि तर्हि प्राप्नोति । षडङ्गुलिः षडिक इति ।

अषष्ठ्याजादिवचनात् सिद्धम् । वा ।

अषष्ठ्याजादिवचनात् सिद्धमेतत्" ॥

एकेति । (कै)

तथा चाज्झलादेशत्वादाचिके भत्वेऽपि न स्थानिवत्त्वमिति भाव ।
एव च भावसाधनपक्षोऽत्र स्थित ॥ पूर्वपक्ष्याह

कथ ब्रह्मबन्ध्वेति ॥ (भा)

सिद्धान्त्येकदेशी उक्तमपि च सम्प्रतिपदान्त इत्येव रूप
सिद्धान्त परेण गृहीतत्वात पक्षानुरूपबलिन्यायेनाह

[1] उभयत इति ॥ (भा)

तद्व्याचष्टे

यस्मात् स्वादिविधिरिति । (कै)

अत एवात्र [2] नैकदेशविकृतन्यायेन धान्तस्य पदत्वसम्भावना ।
उकारान्ताद्दृद्धिविधानेनाक्परिमाणसञ्ज्ञात्वेन दुर्लभत्वात । उभयत
आश्रयणे' इत्यस्यैकदेशिमतत्वाच्च । एतच्च [3] 'अन्तादिवत' सूत्रे
वक्ष्यते ॥ पूर्वपक्ष्याह

कथ वेतस्वानिति ॥ (भा)

अथ वेतस्वानित्येव जातीयकानामेतदनुदाहरणत्वमेवेति बोध-
यितु वास्तव सिद्धान्तमाह

नैवमिति ॥ (भा)

तद्व्याचष्टे

---

१ उभयत आश्रयणे नान्तादिवदिति । भा ॥

२ एकदेशविकृतमनन्यवत् । ३७ परिभाषेन्दुशे- ॥

३ अ ६ । पा १ । सू ८५ ॥

न च ह्मतुबिति। (कै)

एव ब्रह्मबन्धूशब्दे ऊकारो न पदमिति बोध्यम्। नन्विदम-युक्त [1]गतिकारकोपपदाना सुबुत्पत्ते पूर्वं समासेऽसुबन्तत्वेन सुबन्तेन समासे [2] उत्तरपदत्वे च इति [3]प्रत्ययलक्षणनिषेधेन चोत्तरस्या-पदत्वाद गोऽचेत्यादावल्लोपस्य स्थानिवत्वेनावडापत्तेरिति चेन्न। उत्तरपदस्य कार्य्यित्वे एव प्रत्यासत्त्या तन्निषेधप्रवृत्ते । अत्र चेद भाष्यमपि मानम। सुबुत्पत्ते पूर्वं समासस्य चैतद्विषयेऽनित्यत्वान्न-प्रवृत्तिरिति भाव । एव च विग्रहद्वयप्रदर्शनेन पदचरमावयवे कर्त्तव्ये परपदस्याजादेश एव न स्थानिवदिति भाष्ये ध्वनित कानि सन्तीत्याद्येवोदाहरणम्। एव च पूर्वसूत्रेऽपरविधाविति प्रघट्टकस्थ-कैयटग्रन्थो [4] भो भगो इतिसूत्रस्थकैयटग्रन्थस्य चिन्त्य एव। एव षडिके इत्याद्यपि चिन्त्यम्। इकस्य पदत्वाभावेऽपि ङ्गुलिशब्दा-कारयोर्लोपे तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेन दोषादिति दिक्॥ भाष्ये

पदस्यान्त (भा)

इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्याऽजादेशस्य स्थानिवत्त्वनिषेधे-

---

१ गतिकारकोपपदाना कृद्भि सह समासवचन प्राक सुबुत्पत्ते । ७५ । परिभाषेन्दुशे– ॥

२ उत्तरपदत्वे चापदादिविधौ । वा । नलमताङ्गस्य । १ । १ । ६३ । एतत सूत्रस्य वार्त्तिकम् ॥

३ अ १ । पा १ । सू ६२ ॥ ४ अ ८ । पा ३ । सू १७ ॥

ऽपि न दोष इति प्रौढ्याप्रतिपादयितु भसञ्ज्ञाच बाधिका भविष्यतीति स्वोक्तेरेकदेशाशयमाह

अथवेति । (भा)

य सम्प्रतिपदान्त इत्येतन्नु न शब्दमर्य्यादालभ्यमितिभाव । अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या। तावताऽपि भसञ्ज्ञाया पदान्तविधित्वानुपपादनात । कि च यथा कारकाधिकारे कारक सत्कर्मेतिव्याख्यानेन तयो सञ्ज्ञयो समावेश उक्तस्तथाऽत्रापि स्यात। न हि भत्वपदत्वयो समावेश इष्ट । तस्मादेव व्याख्येयम्। यथा रुत्वजश्त्वादीना साक्षात प्रापक प्रतिबन्धको वा स्थानिवद्भाव प्रतिबध्यते तथा भसञ्ज्ञाविषयातिदेशस्यापि परम्परया तत्त्वाद् निषेध इति । यथैवान्यानि पदकार्य्याणि पदचरमावयवकार्य्याणि रुत्वजश्त्वादीनि तत्प्रापकपदसञ्ज्ञारूप चात्र सूत्रे उपस्थवन्ते। पदान्तविधिशब्देन गृह्यन्ते। पदचरमावयवप्रापकाद्यपि तत्त्वेन गृह्यते। एवमिदमपि भसञ्ज्ञारूपमपि। पदकार्य्यम् परम्परया पदचरमावयवप्रापक प्रतिबन्धक वा पदचरमावयवत्वेन गृह्यते इत्यथ । अय भाव । यथा पदान्तपदे उपस्थितत्वात् पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद् द्वारापि पदचरमावयवविषयस्थानिवत्त्वप्रतिषेध इति ॥ "षडिके" तु [1] षष्ठाऽजादिवचनात्सिद्धम्' इति [2]'द्वितीयादच ऊर्ध्वलोपविधायकवचन-

---

१ अ ५ । पा ३ । सू ८४ । एतत सख्याकसूत्रस्थवार्त्तिकम् ॥

२ अ ५ । पा ३ । सू ८३ ॥

प्रामाण्यात्तद्विषये न भलद्वारा पदचरमावयवमपाकस्थानिवत्त्वप्रतिषेध इति न दोष । वाचिके त्वेव न दोष । उत्तरपदलोपविधानात । पञ्चमे चेदमुपपादयिष्यते । एव च आमलकी तटी भारसीत्यादौ जश्त्वादिप्रसक्तिरेव नेति बोध्यम् । यद्यपि पूर्वत्राऽसिद्धे न स्थानिवदि ति निषेधोऽत्र प्राप्नोति । तथापि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादि सिद्धान्तान्बोधयितु पूर्वत्राऽसिद्धे इत्यादावपि साक्षात्परम्परया वा प्रापकप्रतिबन्धकस्य निषेध इत्यादिबोधयितु पदेऽन्त इति सप्तमीसमासेन वेतस्वान' इत्यादौ न पदान्ते ति निषेधवारणेन पूर्वत्रासिद्धे ने त्यत्र पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणमेव जश्पदेनेति बोधयितुमुपक्षेप इति बोध्यम् ॥ भाष्ये

अवर्णलोपविधिमिति (भा)

[1] आतो लोप इटि च इत्येत प्रतीत्यथ । एव च वरे यलोपग्रहणे कृतेऽपि 'यायावर इत्यस्याऽसिद्धिरितिशङ्का ॥ यातिरित्यस्याऽसिद्धे सिद्धान्तमाह

अथवेति ॥ (भा)

यलोपे किमिति । (भा)

यायावरे' यलोपस्य वरे इत्यनेनैव सिद्धत्वात्प्रश्न ॥

[2] क्वौ लुप्तमिति । (भा)

यद्यप्यप्रत्ययशब्देन विजप्युच्यते तथापि तस्य क्वाचित्कत्वान्नदोष । क्विग्रहण विचोऽप्युपलक्षणमित्यन्ये ॥ कैयटे

---

१ अ ६ । पा ४ । सू ६४ ॥ २ क्वौ लुप्त न स्थानिवत् ॥

उक्तं हीति । (कै)

[1] कण्वादिभ्यो यग् इत्यत्र भाष्ये ॥

उपधात्वविधि प्रतीति । (भा)

प्रत्ययविधौ इत्यनाश्रित्येदम ॥

तत इति । (कै)

आदित्यशब्दादित्यर्थ । आदितेरपत्य ण्यान्ताद्देवतार्थे ण्य इति तु नोक्तम । [2] आपत्यस्य इत्यस्य प्राप्त्या पूर्वत्रासिद्ध इत्युत्तरग्रन्थासङ्गते । तस्मादेतत खण्डनमेतदज्ञानेनैवेति बोध्यम् ॥

कण्डूतिशब्दस्येति । (कै)

विशेषणत्वादित्यर्थ ॥ न चात्रालोपस्य स्थानिवत्त्वादुवङ् एव स्यादिति वाच्यम् । जाते तत्रोठा सिद्धे । ऊठि तु न स्थानिवत्त्वमनादिष्टादच स्थानिवत्त्वाभावात् । अस्मादेव भाष्यप्रयोगात स्थानिद्वारक तदाश्रयण क्वाचित्कमित्याहु ॥ ननु [3] लिती ति-वचनसामर्थ्यात् स्यादेवेत्यत आह

कारक इतीति । (कै)

अत्र वचन सावकाशमिति भाव ॥

स्वरविधौ इति (कै)

धातुस्वरप्राप्ते सस्यादिति भाव ॥

---

१ अ ३। पा १। सू २०॥ २ अ ६। पा ४। सू १५१॥
३ अ ६। पा १। सू १९३॥

## अन्यव्यवधाने इति । (कै)

अजव्यवधाने इत्यर्थ । अज्व्यवेति वा पाठ । लुप्ततया तदनुच्चारणेन तदाश्रयस्यापादयितुमशक्यत्वात्तस्य स्यादिति नापादित [1]स्वविधौ स्थानिवत्त्वाभावाच्च ॥ ननु स्तितौ त्यच प्रत्ययात्पूर्वमित्यनुवृत्ते पूर्वग्रहणस्य सत्त्वा[2]न्निर्दिष्टपरिभाषाऽनुपस्थिति पूर्वशब्दस्य व्यवहितेऽपीति न दोषोऽत आह

## यच्च त्विति । (कै)

तच्चाव्यवधानारोपेणैव प्रयोग पूर्वादीना चाव्यवहिते एव शक्तिरिति भाव ॥

## यच्च त्विति । (कै)

मुख्ये सम्भवति आरोपितग्रहणे मानाभाव इति भाव । परन्त्विद चिन्त्यम । [3] तस्मिन्निति सूत्रे निर्दिष्टग्रहणात । तस्मादुत्तराशविकल्पपरिभाषोपस्थिते [4] प्रत्यय [5] परश्च इत्यादौ दृष्टत्वादत्राप्युपस्थितिरितितत्त्वम ॥

## पक्षे स्यादिति । (कै)

[6] अनुदात्त पदम् इति वचनात पचे इत्युक्तम् । चिकीर्षक इत्याद्यर्थमावश्यकेन निषेधेनैव सिद्धेस्तित्त्वसामर्थ्यमेव कथमिति चिन्त्यम् ॥ भाष्ये

---

१ स्वरविधौ । क्रम् ॥   २ तस्मिन्निति निर्दिष्टे पूर्वस्य । १ । १ । ६६ ॥
३ अ १ । पा १ । सू ६६ ॥   ४ अ ३ । पा १ । सू १ ॥
५ अ ३ । पा १ । सू २ ॥   ६ अ ६ । पा १ । सू १५८ ॥

## पचारत्य इति । (भा)

अन्तरङ्गत्वेनापीद सिद्धम। बकुखट्वक इत्युदाहरणम्। अत्र कपि [1] 'आपोऽन्यतरस्याम्' इति ह्रस्वत्वे तस्य स्थानिवत्त्वाद ह्रस्वान्तेऽन्त्यादिति स्वरो न भवति। प्रतिदीव्ने त्यत्र बहिरङ्गत्वेनासिद्धत्वमल्लोपस्येति न शङ्क्यम। त्रिपाद्या तदप्रवृत्ते। वाय्वोरि त्यत्रापि यथा न था तथोक्तम ॥

## रेफेति। (कै)

अत्र तु नान्त भमिति भाव ॥ न सूत्रान्तरवृत्तित्व प्रकृतत्वमित्याह

## प्रस्तुत इति। (कै)

पदान्तरेणाव्यवधानरूपाऽऽसत्तिरानुपूर्व्यम्। विच्छिन्ना विभिन्नदेशस्था ॥ भाष्ये

## [2]यथेष्ट सम्बन्ध । (भा)

इष्टवाक्यार्थबोधजनकत्वरूप ।

---

१ अ ७। पा ४। सू १५ ॥

२ आनुपूर्व्येण सन्निविष्टाना यथेष्टमभिसम्बन्ध शक्यते कर्तुम ॥ नचैतान्यानुपूर्व्येण सनिविष्टानि ॥ तथानुपूर्व्येणापि सनिविष्टाना यथेष्टमभिसम्बन्धो भवति। तद्यथा। अनड्वाहमुदहारि या त्व हरसि शिरसा कुम्भ भगिनि साचीनमभिधावन्तमद्राक्षीरिति। तस्य यथेष्टमभिसम्बन्धो भवति उदहारि भगिनि या त्व कुम्भ हरसि शिरसा अनड्वाह साचीनमभिधावन्तमद्राक्षीरिति ॥

असम्भवादिति । (कै)

चख्नतु जग्मतुरित्यादौ सम्भवात् चिन्त्यमिदम् ॥

पारिशेष्यादिति । (कै)

व्याख्यानाच्चेत्यपि बोध्यम् ॥

एतावदिति । (कै)

पूर्वोक्तो *नियमोऽपीत्यर्थ ॥ ननु सूत्रस्यैकत्वात्तावन्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह

ग्रहणकवाक्यादिति ॥ (कै)

[1]पाठक्रमादिति । (कै)

आर्थक्रमो नाम राजपुरप्रवेशन्यायेन स्वस्वाकाङ्क्षितार्थान्वयक्रम । एव च कल्पितासन्नवाक्याद्बोधविषये तात्पर्य नियामकमिति भाव । भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशा-द्व्युत्पत्त्यनुसारेणान्वयबोध इति भाव ॥ साचीनम् इत्यस्य तिर्यग्गच्छन्तमित्यर्थ ॥ [2] क्लिलुग्' इति वार्त्तिके क्वावि त्यत्र विधावित्येतदध्याह्रियते तेन क्विनिमित्तविधावित्यर्थ । आवृत्त्या क्वावित्यादेशेनापि सबध्यते । क्विनिमित्तादेश इत्यर्थ । तदेतदर्थत पठ्यते

[3]क्वौ लुप्तमिति । (भा)

इद च क्वाचित्कमितिवक्ष्यते । एव लुग्रूपे आदेशे उपधात्व

---

१ पाठक्रमादार्थक्रमो बलीयान् इति ॥

२ क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् । वा ॥

३ क्वौ लुप्त न स्थानिवत् ॥

प्रयुक्ते कार्य्ये चङ्परकृत्स्ने कुले च स्थानिवत्त्व नेत्यर्थ ॥ भाष्ये [1] कौ इत्यस्य कौलुप्तमित्यर्थे उदाहरण कण्डूरिति कयजन्तात् क्विप् । अत्र यण् न यलोपस्य भवतीतिभाव ॥ तचान्य खण्डयति

**यल्लोपेति ॥ (भा)**

**पिपठीरिति । (भा)**

अल्लोपस्य स्थानिवत्त्वेन रेफान्तस्यापदत्वाद दीर्घो न स्यादिति-भाव । अत्र रुत्वमप्येतदधीनमेव ॥

**लावयतेरिति । (भा)**

ण्यन्तलूधातोरित्यर्थ ॥

**ऊड् नेति । (कै)**

कौ वान्तस्याऽनङ्गत्वादितिभाव । ऊठि एत्येधती ति वृद्धि ॥

**वर्णाश्रयत्वादिति । (कै)**

[2] अच परस्मिन इति स्थानिवत्त्व तु न वृद्धेरनादिष्टादच पूर्वत्वाभावात ॥

**तत्र त्विति । (कै)**

कारक इत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थस्तथैव च [3] आतो लोप इति सूत्रे भाष्ये स व्याख्यात इति भाव ॥ परे तु [4] चत्वतुको इति ज्ञापकाद् अनित्यत्वेनान्तरङ्गत्वमनाश्रित्य 'कौ लुप्तम्' इति न कार्य्य नित्यत्वाच्च पूर्व णिलोप । वृद्धिस्त-कृते णिलोपे उपदेशेन कृते त्वतिदेशेनेत्यनित्येतिपूर्वपक्ष्याशयमाहु ॥

---

१ कौ किमुदाहरणम ॥ २ अ १ । पा १ । सू ५७ ॥
३ अ ६ । पा ४ । सू ६४ ॥ ४ अ ६ । पा १ । सू ८६ ॥

## देवयतेरिति । (कै)

ण्यन्ताद्दिवेरित्यर्थः ॥ नन्वचोऽठ् ऊौविधिमित्येव सिद्धं । नचो-कारस्य वृद्धिः स्याद् णे स्थानिवत्त्वादिति वाच्यम् । ऊठ आदि-ष्टादच पूर्वत्वादिति नेदमसाधारणमुदाहरणमिति चेन्न । सखीयते सख्युरिति ख्यत्यात सूत्रभाष्योक्त[1] ण्यन्तपदे पात पद इति [2] येन विधि इति सूत्रभाष्योक्त कण्डूति पिपठी इत्यादौ यणभावत्वयो सिद्धिस्य तस्याऽसाधारणमुदाहरण स्थानिद्वारके-ऽनादिष्टादच पूर्वत्वे तु इदमप्युदाहरणमिति बोध्यम् ॥

## नैव विज्ञायते क्कौ लुप्तमिति (भा)

नैवमेव विज्ञायते किञ्चिदमपि क्काचित्क लक्ष्यसिद्धये आश्रय-णीयमिति भाव ॥

## तदाश्रये इति । (कै)

[3] वृक्षजाति स्त्रियाम् इति लिङ्गानुशासनाद् वृक्षे स्त्रीलिङ्गत्व फले च नपुंसकत्वमिति भाव । वस्तुत आम्र इत्यादौ लिङ्गानु-शासनस्य व्यभिचारादेतद् भाष्यप्रामाण्याच्च बिम्बवदरामलका वृक्षेऽपि त्रिलिङ्गा इत्याहु ॥

---

१ गोमत्यतेर्गोमानिति 'उगिदचाम' इति सूत्रभाष्योक्तम् । क । ग ॥

२ अ १ । पा १ । सू ७२ ॥

३ "वृक्षजाति" (लिङ्गानुशासन — सू) । स्त्रियामेव क्वचिदेवेदम् ॥
"फलजाति फलजातिवाची शब्दो नपुंसक स्यात (लिङ्गानुशा—) ॥

कि तर्हीति । (कै)

यौगिकत्वे हि वृक्षसम्बन्धात्फले न पुन फलसम्बन्धाद्वृक्षे इत्यत्र विनिगमनासम्भवादिति भाव ॥

विशिष्टेति । (कै)

विजातीयेत्यर्थ ॥

अन्तरङ्गानपीति । (कै)

अस्य न्यायस्यान्तरङ्गनिमित्तविनाशकत्वेन एव तदन्तरङ्गबाधकताबोधकत्वे तु तत्परिभाषाप्रवृत्त्याभावसंपादकस्यानिवत्त्वनिषेधायेदमिति बोध्यम् ॥

अव्ययविकेति । (कै)

[1] वोतो गुणे' ति ङीषो वैकल्पिकत्वादिति भाव ॥

प्रतिपत्तिगौरवेति । (कै)

ज्ञानगौरवेत्यर्थ ॥ ननु भसञ्ज्ञकस्य न पुवत्त्व येन वर्णाश्रयतया भत्वाभावेन पुवत्त्व न स्यात् किं तु तत्प्रत्ययविषये पूर्वमेव पुवत्त्वप्रतिपत्तिरत आह

यद्यपीति ॥ (कै)

इह तु लुकीति । (कै)

अनेन [2] 'न लुमते' ति निषेधान्न प्रत्ययलक्षणम् । किं च ढभिन्नतद्धितविषयाभावादपि न तत्प्रवृत्तिरित्यपि ध्वनितम् । किं

---

१ अ ४ । पा १ । सू ४४ ॥ २ अ १ । पा १ । सू ६३ ॥

चान्तरङ्गानपीति न्यायेन एकादेशात् पूर्वमेव लुकि [1]प्रत्ययलक्षण-सत्त्वे यजादित्वाभावान्न भत्वम्। न च वर्णप्राधान्याभावात् कथं वर्णाश्रये नास्तीत्युक्तिर्भगवत इति वाच्यम्। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वमिति पक्षेऽदोषात ॥ [2] न लुमताङ्गस्य इति यथाश्रुते-ऽभ्युपेत्याऽपि [3] ठक्छसोश्चे ति पुंवत्त्व भाष्ये आह

न खल्वपीति ॥ (भा)

नन्वानुग् न ङीषीत्युच्यते येन स्थानिवत्त्वेन तदापत्तिरत आह

सन्नियुक्त इति । (कै)

एवं च सन्नियोगशिष्टपरिभाषाप्राप्ताऽऽनुग्निवृत्तिप्रतिबन्धद्वारा आनुग्रक्षणमेव पूर्वविधिरिति भाव । अत एवैनेय इत्यादौ [4] यस्येति लोपे नस्य श्रवणम्। अत एव [5] अचः परस्मिन् इति सूत्रे विधिशब्दस्य भावसाधनत्वे पूर्वस्य विधान प्रतिपूर्वस्य भाव प्रतिपूर्व स्यादिति स्थानवदित्यर्थ उक्त ॥

पूर्वं स्यात् (कै)

इत्यस्य पूर्व स्थित स्यादित्यर्थो बोध्य । एवं च पूर्वसूत्रे तन्त्रेणो-भयसाधनविधिशब्दघटितग्रहणम्। यत्तु कैयटादिभि सन्नियोग-

---

१ "प्रत्ययलक्षणसत्त्वेऽपि इत्यधिकम । ग पुस्तके ॥

२ अ १ । पा १ । सू ६३ ॥

३ वा- अ ६ । पा ३ । सू ३५ ॥

४ अ ६ । पा ४ । सू १४८ ॥

५ अ १ । पा १ । सू ५७ ॥

ष्टिपरिभाषाऽनित्यत्वेनेदं साधितं तद्वृथैव ॥ नन्वत्रापि [१] भस्याढे' इति पुंवत्त्वं स्यादत आह

समानायामिति । (कै)

पुंसि इन्द्रत्वादिप्रवृत्तिनिमित्तं स्त्रियान्तु तत्सम्बन्ध इति भावः ॥ नन्वेवम् अग्नायी देवताऽस्याग्नेयं हविरिति उदाहरणासिद्धिस्तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमित्यत आह

वर्णाश्रयत्वादिति । (कै)

अणो लुकि [२] न लुमते' ति निषेधाद् ढभिन्नतद्धितविषयाभावाच्चेत्यपि बोध्यम् ॥

अयवेति । (कै)

ङीलुकः स्थानिवत्त्वेन झलादीकारपरत्वाच्चेति भावः ॥

शब् लुकीति । (कै)

अन्यथा शब् लुकः स्थानिवत्त्वेन व्यवधानात प्राप्तिरेव नेतिभावः । [३]शब् लुकः [४]परनिमित्तत्वाभावादेव न स्थानिवत्त्वप्रसक्तिः । अत एव जुहुत इत्यादौ श्लौ स्थानिवत्त्वान्न गुणः ॥ भाष्ये

योऽसौ णाविति । (कै)

'णेणिच्युपसंख्यानम्' इति सिद्धमेतत । वस्तुभेदान्न दोष इति

---

१ भस्याढे तद्धिते । वा । तसिलादिष्वाकृत्वसुच (६ । ३ । ३५) इति सूत्रस्थवार्त्तिकम् ॥

२ अ १ । पा १ । सू ६३ ॥ ३ वस्तुतः । क । ग ॥

४ परनिमित्तकत्वाभावात् — । ग ॥

तत्त्वम् । अत एव ज्ञापकात प्रायोगिकमच्स्थानिकादेशत्वमेव अच परस्मिन् इत्येतत प्रवृत्त्युपयोगीति बोध्यम् ॥

प्रत्ययविधाविति । (भा)

अत एव चङ्परह्रस्वे निषेध साधक ॥ ननूपधात्वे स्थानिवत्त्वनिषेधेऽपि ञ्णित्परत्वांशे णिपरत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नाऽपि ह्रस्वे निषेधो व्यथ इति चेन्न। प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन ञ्णिति णावित्यादेरङ्गविशेषणत्वस्यैवौचित्यात । उपधात्वप्रयुक्तकार्य्ये एव तन्निषेधेन णित्परत्वाद्यंशेऽपि स्थानिवत्त्वनिषेधाच्च ॥

अर्क इति । (भा)

कमणि घञ्[१] चजो इति कुत्वमिति भाव ॥

नैतद् घञन्तमिति । (भा)

एरच् प्रसङ्गादित्यथ ॥

एतदपीति । (भा)

एव च कुत्व इत्यावश्यकमिति भाव ॥ वस्तुतस्तदनावश्यकमित्याह

पूर्वत्रासिद्धे इति । (भा)

अच परस्मिन् इत्येतद्दृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽय तत्फलन्तु अतिदेशान्तराणा वतिघटितानामन्ता-

---

१ अ ७। पा ३। सू ५२॥

द्विवदित्यादीना चिपाद्या प्रवृत्तिबोधनम् । तेनामी चीरपेण इत्यादौ तत्सिद्धिरितिदिक् ॥

**अदुग्धेति ।** (भा)

क्सस्यान्तलोपे [1]"झलो झली"ति सलोपे तदीयाऽल्लोपस्य स्थानिवत्त्व न ॥

**चतुर्थत्वे इति ।** (भा)

भष्भावे इत्यर्थ ॥

**चकार इति ।** (भा)

स्ध्वोरित्यनुकर्षणाय इत्यर्थ ॥

**पूर्वेणैवेति ।** (कै)

[2] एकाचो बश इत्यनेनेत्यर्थ ॥ ननु सयोगान्तलोपप्रभृतिषु इत्युक्त्वा त विहाय कुलाद्युदाहरणदाने बीजाभावोऽत आह

**सयोगान्तेति ॥** (कै)

**पदान्तेति ।** (कै)

चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात् । परपदस्याजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति ॥ तदुदाहरणानि दर्शयति

**स्कन्दयतेरित्यादिना ॥** (कै)

**काष्ठतगिति ।** (कै)

न च काष्ठशगेव नास्ति कुत 'काष्ठशकस्थाते'ति [3]"परश्च"

---

१ अ ८। पा २। सू २६॥ २ अ ८। पा २। सू ३७॥
३ अ ३। पा १। सू २॥

इति सूत्रस्थभाष्यादेषामनभिधानमिति वाच्यम्। यत्र सयोगादि लोपप्रसक्तिस्तद्विषयत्वेनाऽनभिधानस्यादोषात॥ नन्वत्र सयोगादिलोप प्राप्नोति न च तत्र पदान्तविधित्वमिति न तेन सिद्धिरत आह

सयोगादिलोपेति। (कै)

केचित्तु एतद्भाष्यप्रामाण्यादेषा प्रयोगाणामनभिधानमेवेत्याहु॥ भाष्ये

वरेयलोपस्वरवर्जमिति। (भा)

सवर्णानुस्वारदीर्घादय साहचर्य्यात त्रैपादिका एव गृह्यन्ते इति भाव॥ नन्वेव यडन्ताण्णिजन्तप्रकृतिकण्यन्ताद्वा विणि अम्र-म्रामि अम्रामीत्यादौ दीर्घो न स्यात् णिलोपाल्लोपयो स्थानि-वत्त्वादितिचेन्न॥ णेण्च्युपसख्यानाद अम्रामीत्यस्य सिद्धे। अम्र-म्रामीति यडलुगन्तादु णिचि भविष्यति। न हि यड् यड् लुको स्वरे रूपे वा विशेष॥ ग्राहितम् इत्यादौ विहितविशेषणाश्रय-णान्न दीघ इति दिक्॥ अन्ये तु तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्या-दन्यदीर्घमप्युपलक्षयन्ति। एतच्च तत्रैव निरूपयिष्याम॥ भाष्ये

काक्यर्थमिति। (भा)

न च [1] स्को इति सूत्रे झल्ग्रहणापकर्षेण झलन्तसयोगस्यैव ग्रहणात्प्रकृते न दोष इति वाच्यम्। झलो लोप [2] सयोगा-न्तलोप' इत्याष्टमिकभाष्येण सयोगादिलोपे तदसम्बन्धबोधनात। त्रिपाद्या बहिरङ्गासिद्धत्वाप्रवृत्तेश्चेतिभाष्याभिप्राय।

---

१ अ ८। पा २। सू २९॥ २ अ ८। पा २। सू २३॥

निगाल्यत इति ॥ (भा)

नन्वचान्तरङ्गत्वादेव लत्व सिध्यति इति वाच्यम । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्रवृत्ते । त्रिपाद्या तत्परिभाषाऽप्रवृत्तेश्च । न च प्रत्ययलक्षणम् । अल्विधित्वात । [1]प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसमतत्वात ॥ ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्व न स्यादत आह

डीबुत्पत्तेरिति । (कै)

गतिकारकोपपदाना कृद्भिरितिवचनादिति भाव । न च बहिरङ्गासिद्धत्वेनेद सिद्धम् । त्रिपाद्या तदप्रवृत्तेरिति दिक् ॥

---

# द्विर्वचनेऽचि । १ । १ । ५९ ॥

अथाऽपीति । (कै)

प्रौढिवादोऽयम् । तत्पक्षस्याश्रितत्वात । [2]'न पदान्त' सूत्रे आष्टमिकद्वित्वस्यैव ग्रहणाच्च ॥

यण्युक्तस्यैवेति । (कै)

यद्यपि स्थानिवत्त्वे द्विवचन नित्य तथापि यणपि नित्य इति परत्वात् स स्यादिति भाव । इदमेवाभिप्रेत्य भाष्ये

---

१ अ १ । पा १ । सू ६२ ॥ २ अ १ । पा १ । सू ५८ ॥

[1]अभ्यासरूपं न सिध्यतीति (भा)

एतावदेवोक्तं न तु निन्यतुरित्यादावियङ् उत्तरखण्डे अवण् स्यादित्यापादितं तस्यानित्यत्वेन ततः पूर्वं द्वित्वस्यैव प्रवृत्तेरिति ॥ दुर्लक्ष्योऽपि विशेषः सूक्ष्मदृशः प्रतिदुर्वारोऽत आह

छान्दसस्यैवेति। (कै)

एवं च दातिः प्रियाणीति तिवद्वित्वाभाव इति भावः। अत्रोपधालोपस्य छान्दसत्वं वदता क्नसो लौकिकत्वमभ्युपेतम् ॥ ननु सिद्धान्ते द्वित्वनिमित्तेऽचीत्यर्थस्तदाऽचीति किमर्थम्। अरिरिषतीत्यादिसिद्ध्यर्थे कार्यमनुभवन् कार्यिणो निमित्तत्वानाश्रयणेनाचापि 'नटभार्यावद्व्यञ्जनानी'ति भाष्यरीत्या द्वितीयाजवधिकस्य न्नीय् इत्यस्यैव द्वित्वप्राप्त्या यङ कार्यित्वेन द्वित्वनिमित्तत्वाभावात्कथं तन्निमित्तादेशे स्थानिवत्त्वप्रसक्तिरिति चेन्न। द्वितीयहल्व्यन्तस्यैव द्वित्वमितिमते तत्सत्त्वात्। अत एव प्रातिशाख्ये उक्तं स्वरान्तरे व्यञ्जनान्युत्तरस्येति। अरिरिषतीत्यादौ रि इत्यस्य द्वित्वेऽपि इकारस्य अनवयवतया अनो द्वित्वानुभवेन तन्निमित्तत्वाभावादिति दिक् ॥ भाष्यरीत्या त्वधिजगे इति व्यावर्त्यं बोध्यम् ॥ ननु लिटि विधीयमानस्य गाङ कथमच्यादेशत्वमत आह

[2]कृते इति ॥ (कै)

---

१ कृत्येजन्तद्विवादिनामधातुष्वभ्यासरूपं न सिध्यति। भा ॥

२ 'अधिजगे' इति कृते एप्रादेशे गाङितिप्रक्रियाश्रयेण चोद्यम्। ङकारस्यानुबन्धत्वादिकारस्य गाङ भवत्यजादेशः ॥

## ङकारस्येति । (कै)

प्रकृतसूत्रे प्रयोगे निवर्त्यस्यैव स्थानित्वेन ग्रहणम् अच परस्मिन् इति वदिति भाव ।

## द्वित्वकारक इति (भा)

भाष्ये। एव चाचि नाऽयमितिभाव । एव च इदमज्ग्रहणव्यावर्त्यमिति स्पष्टमेवोक्तमिति बोध्यम। न च सिद्धान्ते आद्धधातुवे लिटी 'त्यादीना तत्र विषयसप्तमीत्वेनानैमित्तिकत्वान्न तत्र दोष इति वाच्यम् । विषयसप्तमीत्वेऽपि बुद्धिकृतनिमित्तत्वस्य दुर्वारत्वेन सनैमित्तकत्वमस्त्येवेति भाष्याशयात। अत्र पच पचा । अचि योऽजादेश स द्वित्वे कार्य्ये स्थानिवदित्येक ॥ अजादौ प्रत्यये योऽजादेश स द्वित्वे स्थानिवदिति द्वितीय ॥ द्विवचनशब्दस्याधिकरणल्युडन्तत्वाद् अश आद्यजन्तत्वाद्वा द्वित्वनिमित्तेऽचीत्यादीतितृतीय ॥ द्वित्वनिमित्तेऽचि आदेशनिषेध इति चतुथ ॥ द्वित्वनिमित्तेऽचि योऽजादेश स स्थानिवद न भवति वा द्वित्वे कार्य्ये इतिपचम ॥ तत्राऽऽद्ये दोषोऽक्लावनमित्याह

## अचीति ॥ (कै)

'कृते" १ 'उपधायाश्च इतीत्त्व तस्य च णिनिमित्ततयाऽप्यादेशता । अङ्गाक्षिप्ते प्रत्यये तद्विधानात् ॥ ननु आत्त्व कथमप्यादेशोऽनैमित्तिकत्वादत आह

## शित्सहश इति । (कै)

---

१ अ ७। पा १। सू १ १॥

श्निदिति तत्पुरुष । इत्सञ्ज्ञकश्नकारादिप्रत्ययभिन्नप्रत्यय इत्यर्थ । अन्तरङ्गत्वात्तिबादिषु एश्नि च कृते आत्त्वमिति भाव ॥ दिवे सनि [1] सनीवन्त्रे तीडभावपक्षे [2] हलन्ताच्च इति कित्त्वे [3] च्छ्वोरिति त्वूठि यणि च [4] सन्यङो इति द्वित्वेरूपम् ॥ द्वितीयं निराकरोति भाष्ये

[5]प्रत्यय इति ॥ (भा)

त्रपुसमिति । (कै)

त्रपषमिति पाठान्तरं त्रपुसमिति च ॥ कर्मधारयमुपपादयति

[6]विशिष्टावस्थेति । (कै)

रूपरसगन्धान्तरयुक्तमित्यर्थ । आद्ये त्रपुस फलविशेष । द्वितीये समासाभावेऽपि न क्षतिरितिबोध्यम् ॥

तद्रूपाऽऽरोपेणेति । (कै)

दृष्टान्तवलेन तथैव लाभात ॥ ननु दृष्टान्ते लक्षणाया अव्यभिचारेण काव्यजननप्रतीति प्रयोजन प्रकृते च न किंचित्तथेतिलक्षणा दुरुपपादेत्यत आह

अथवेति ॥ (कै)

कालेति । (कै)

---

१ अ ७। पा २। सू ४९॥ २ अ १। पा २। सू १ ॥
३ अ ६। पा ४। सू १९॥ ४ अ ६। पा १। सू ९॥
५ प्रत्यय इति चेदिति । ग । क ॥
६ अत्र ' दध्येव ' इति प्रतीकं क ग चिह्नितपुस्तकेऽस्ति ॥

द्विवचनविधानसमय एवेत्यवधारणाभाव इत्यर्थ । एव चक्रतुरित्याद्यसिद्धि पुनर्यणादेशानापत्तेरिति भाव । प्रत्ययश्च विशेष्यते द्विवचन चेत्यस्य चिकीर्षितत्वेन निर्दिश्यत इति शेष ॥ तत्राश्रुतस्य प्रत्ययस्य कथ विशेष्यत्वमत आह

द्विर्वचनेनेति । (कै)

अचीत्युपादानात् षाष्ठमिह द्विवचन तच्च प्रत्यये इति तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थ । तद्भावभावितामात्रेण निमित्तताया आश्रयणात्सन् यङन्तस्य द्वित्वेऽपि तदाऽऽक्षेप । स चाचीत्यस्य श्रवणात सप्तम्यन्तस्यैवेति भाव ॥

अचीत्येतच्च तस्येति । (कै)

विशेषणमित्याख्यते । तदादिविधिरित्यस्य तेनेत्यादि । तदयमर्थ । द्वित्वनिमित्ताजादिप्रत्ययनिमित्तोऽजादेश स्थानिवद् द्वित्वे कर्त्तव्ये इति ॥

विरुद्धत्वादिति । (कै)

एव च सहविवक्षाभावान्नैकशेषो वक्तु शक्य इति भाव ॥

[1]प्रागेव । (कै)

सर्वादीनीत्यत्र ॥ नन्वेकशेषे द्विवचनाऽपत्तिरत आह

विभक्त्यन्तयोरिति । (कै)

---

१ सहविवक्षाभावेऽपि "सरूपाणाम्" (१ । २ । ६४) इत्येकशेष सञ्ज्ञापरिभाषावल्लक्ष्यशास्त्रत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयो श्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः ॥

परिभाषावच्छास्त्रमात्रोपयोगित्वादिति भाव ॥ प्रातिपदिकानामेवैकशेषेऽप्याह

**[1]अथवेति।** (कै)

नीलोत्पलस्यधिनी नेत्रे तनुर्वेतिवदिति भाव । क्रमेण बोधाद्वाऽऽवृत्तिर्वोद्धारं प्रति उच्चारयितुस्तन्त्रम्। इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकं न तु साक्षादेवेत्याग्रह । तद्भावभावितामात्रेण [2]निमित्तस्येहाङ्गीकारात। अत एव चक्रतुरित्युदाहरणसगति ॥ स्रोतःसर्वेष्वित्यस्य [3] पुयण्जिषु इति भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह

**पिपविषत इति ॥** (कै)

**अनेन।** (कै)

द्विवचनेऽचि' इत्यनेन ॥ नचाचोत्तरखण्डे जातयोरचो [4]'अच परस्मिन् इति स्थानिवत्त्वेनावर्णपरत्वाभावात् कथ [5] ओ पुयण् इत्यस्य प्राप्तिरिति वाच्यम्। एतत्सूत्रारम्भसामर्थ्येनैव तद्प्रवृत्ते। [6] सनीवन्त इति [7] स्त्रिपूङ इति चोभयचेट् ॥

---

१ अथवैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लभ्यते ॥

२ निमित्तस्य। क। ग॥

३ ओ पुयण्जिषु (७। ४। ८) वचन ज्ञापकं णौ स्थानिवद्भावस्य ॥

४ अ १। पा १। सू ५७॥ ५ अ ७। पा ४। सू ८ ॥

६ अ ७। पा २। सू ४९॥ ७ अ ७। पा २। सू ७४॥

नन्ववर्णपरयुयणजयो णौ प्रत्ययान्तरे च सम्भवन्ति तत्कथ णावित्युक्तमित्याशङ्कते

नन्विति ॥ (कै)

[1]येन नेति । (कै)

प्रकृतसूत्रे परस्मिन इति वर्त्तते तेन द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति योऽजादेश स स्थानिवदिति सूत्रार्थ । तत्राऽनेन ज्ञापकेन व्यवाये प्रवृत्तिर्ज्ञाप्यते तत्र प्रत्ययव्यवधान विना वर्गादीनामुदाहरणासम्भवेन येन नाव्यवधानन्यायेनैकव्यवधाने एव प्रवृत्ति स च णेरेव सम्भवतीति भाव । न च ऊरुव्रजुऋभुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे ऊरूरविषतीत्यादावित्त्वार्थं वर्गादिग्रहण चरितार्थम् । किं च भ्वादिभ्यो विजन्तेभ्य आचारे क्विपि सनि विभविषतीत्यादौ चरितार्थमिति कथ ज्ञापकत्वमिति वाच्यम । [2]"सनिग्रह" इत्यत्रोपदेशाधिकाराभावस्य [3] एकाच उपदेशे इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वादेषामनभिधानाच्च विचोऽसार्वत्रिकत्वाच्च । एतेन दवादिभ्य आचारक्विपि सनि दिदविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम् ॥ भाष्ये

---

१ येननाव्यवधानमित्येकनैव प्रत्ययेन तत्र व्यवधानाश्रयणाणेरेव केवलस्य व्यवधायकस्य सम्भवात ॥

२ अ ७। पा २। सू १२॥ ३ अ ७। पा २। सू १०॥

[1]णौ स्थानिवदिति। (भा)

अत्र णाविति प्रत्ययग्रहणेन यस्माद्विहितस्तदादेरित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थ। यदि त्वनियमप्रसक्त्यभावेन नियमफलायास्तस्या नोपस्थितिरत एव [2] ह्रस्वस्य पिति इत्यादौ न तदुपस्थितिरित्युच्यते तर्हि मास्तु। णौ पर इत्यर्थे रेफेण व्यवधानात पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम्। ज्ञापनफल तुतावयिषतीत्यादि॥

[3]तुल्यजातीयस्येति। (भा)

ण्यादिघटितधात्वच्तुल्यस्याच आदेश इत्यर्थ। षष्ठ्यन्तस्य षष्ठ्यन्ताच इत्यनेनैवान्वययोग्यत्वादिति बोध्यम्॥ अचत्वेन तुल्यत्व ज्ञातेरपीति पृच्छति

[4]कश्चेति॥ (भा)

उत्तरयति।

[5]यथा जातीयका इति। (भा)

ण्यादिघटितधात्वच इत्यर्थ॥ ण्यादिभिरचस्तुल्यत्वासम्भवात्।

[6]अवर्णपरा इति। (भा)

---

१ ओ पुयण्जिषु वचन ज्ञापक णौ स्थानिवद्भावस्य। यदयमो पुयण्ज्यपर इत्याह तज्ज्ञापयत्याचार्यो भवति णौ स्थानिवद्भाव इति॥

२ अ ६। पा १। सू ७१॥ ३ तुल्यजातीयस्य ज्ञापकम। भा॥

४ कश्चतुल्यजातीय। भा॥ ५ यथा जातीयका पुयण्ज्य। भा॥

६ कथ जातीयकाश्चैते। अवर्णपरा। कथ जग्ले मग्ले। भा॥

अवर्णपरत्वसपादकादेशस्थानित्व इत्यर्थ । एवं चावर्णपरत्वसपादकादेशस्थानित्वेन तुल्यतेति भाव । एवं च औननद् औजढद् इत्यादि चिन्त्यमेव। किं च यत्र द्विरुक्तौ परभागस्याद्योऽजवर्णस्तत्रेदमिति द्विवचनेऽचि इत्यादौ भाष्यकैयटयो स्थितमिति माधवोक्त कथ भाष्यारूढमित्यपि चिन्त्यमेवेत्याहु ॥

[1]अनैमित्तिकमात्त्वमिति । (भा)

अत एव [2]'क्वावामश्च इति क्वेत्त्र क्वाबाधनार्थं पुनरत्त्वविधान चरितार्थमिति पर्युदासपक्षेऽप्यदोषम् [3]'आदेच' इत्यत्र भाष्यकारो वक्ष्यति ॥

[4]अनच्कत्वादिति । (भा)

आटिटद् इत्यत्र णिलोपे धातोर्द्वितीयस्याज्रहितत्वादित्यर्थो बोध्य ॥

---

१ अनैमित्तिकमात्त्व मिति तु प्रतिषेध । भा ॥

२ अ ३। पा २। सू २॥

३ आदेच उपदेशेऽशितीति । ६ । १ । ४५ । अथवा पुनरस्तु पर्युदास । ननु चोक्तमशित्येकादेशे प्रतिषेध आदिवत्त्वादिति। नैष दोष । एकादेश पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानम । यदपि प्रत्ययविधिरित्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येजन्तेभ्य आकारान्त लक्षण प्रत्ययविधिरिति यदय ' क्वावामश्च " (३ । २ । २) इत्यत्र क्वाबाधनार्थं शास्ति ॥

४ आल्लोपोपधालोपणिलोपयणादेशेषु कृतेषु अनच्कत्वाद्द्विर्वचन न प्राप्नोति ॥

[1]पूर्वविप्रतिषेधेनाप्येतानीति । (भा)

द्विवचनेऽचि इति सूत्रभाष्यानि णौ स्थानिवदिति ज्ञापकभाष्यानि चेत्यर्थः ॥

न हि नित्यानामिति । (कै)

आल्लोपादीनामित्यर्थः । द्विवचनेऽचि इत्यादेरभावे द्विवचनमनित्यम् ॥ भाष्ये

[2]वक्ष्यति हीति । (भा)

[3] दाश्वान् साह्वान् इति सूत्रे ॥

[4]यणाऽत्र भाव्यमिति । (कै)

यदीयङ् न स्यात् तर्हि स स्यादिति तत्सम्भावनासत्त्वादित्यर्थः । जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः । वस्तुतोऽत्र यणादिग्रहणमचस्थानिकस्य द्विवचनात् परस्य विधेरुपलक्षणं बोध्यम् ॥ सूत्रारम्भवादी आह

स पूर्वविप्रतिषेध इति ॥ (भा)

उभयो समतया तृतीयं पृच्छति

---

१ पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि ॥

२ वक्ष्यति ह्याचार्यः । द्विवचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्त्वेभ्यः । वा । द्विवचनं भवति विप्रतिषेधेन ॥

३ दाश्वान्साह्वान्मीढ्वांश्च । ६ । १ । १२ ॥

४ ‘ यणाऽत्र भवितव्यम् ’ इति कैयटेऽस्ति ॥

[1]किं पुनरिति ॥ (भा)

स्थानिवद्भाव एव ज्यायानिति । (भा)

अयं भाव । अयं पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा । नाद्य । विभवनीयिषतीत्याद्यसिद्ध्यापत्ते । किं चेष्टानिष्टविवेकस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क्व सूत्रमताऽपेक्षया लाघवमिति ॥ अन्त्ये दूषणमाह

[2]ओदौदादेशस्येति । (भा)

अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुचावयिषतीत्यादौ दोष । स्थानिवत्त्व ल्विधित्वान्न इत्यत आह

ओदौतोरादेशो यस्मिन्निति । (कै)

इदमेव ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न विभवनीयिषतीत्यादौ दोष । अत्र सनीत्यंशोऽपि पूरणीय । अन्यथा दिद्वनीयिषतीत्यादौ अनेनोत्त्वापत्ति । तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोष । एकणिज्व्यवधान तु "येन नाव्यवधान न्यायेन सह्यत एव । नन्विद वचन ञो सौत्राद् णिचि चङि सनि वाजीजवत् जिजावयिषतीत्यादावतिव्याप्तम् ।

१ किं पुनरत्र ज्याय । स्थानिवद्भाव एव ज्यायान । पूर्वविप्रतिषेधे* हि सतीद वक्तव्य स्यात ॥

२ ओदौदादेशस्योद्भवति स्रुद्रुप्रुज्वरादेरभ्यासस्येति ॥

* पूर्वविप्रतिषेध ह्येद वक्तव्य स्यात् । इति पाठः किलहरपमुद्रापितभाष्यपुस्तकेऽस्ति ॥

न च चकार एव पाठ्य । गुड्घुड्भ्या णिचि चडि सनि वाजूगवदित्यादौ दोषापत्तेरिति चेन्न। जोर्नेत्यस्याऽपि वाच्यत्वात् ॥ ओदौतो किम्। चिखादयिषति॥ च्वित्यादि किम। बिभावयिषतीत्यादि॥ यद्यपि छो छेदने चिच्छासति इत्यत्रैवातिप्रसङ्ग तथापि औसाहचर्य्यादोकारोऽपि लाक्षणिक एव गृह्यते तदादेशो वा औदादेशसाहचर्य्याद् अवेव गृह्यत इति न दोष ॥

ऊर्णुनावयिषतीति। (कै)

यद्यपि पूर्वत्रासिद्धीयमद्विवे इत्यस्यानित्यतया नुशब्दस्यैव द्वित्वेनाभ्याससञ्ज्ञाप्रवृत्तिकाले ह्रादित्वाभावस्तथापि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्य्ये कर्त्तव्ये पूर्वत्रासिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाभावाच्चैतत्प्रवृत्तिकाले ह्रादित्वमस्त्येवेति बोध्यम् ॥

अभ्याससञ्ज्ञाप्रवृत्तिसमय इति (कै)

एव चाभ्याससञ्ज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुटुतुशरादित्व तत्रास्य प्रवृत्तिरिति भाव। तत्रान्योदाहरण चुत्रावयिषतीत्यादि न हि तत्राद्यकाले तत्त्व चु इति कवर्गादित्वादित्याशङ्क्य ॥ ननु णेद्वित्वनिमित्तत्वाभावेन स्थानिवत्त्वाभावाद्बिभावयिषतीत्यादिसिद्धमिति त्वयापीत्ययुक्तमत आह

[1]ओ श्विति। (कै)

चुत्रावयिषतीत्यादिसिद्ध्यर्थमित्यर्थ ॥

परार्थम् (भा)

इत्यत्र परशब्देन ज्ञापकापेक्षया परमित्त्व विवक्षितमित्याह

---

1 अ ७। पा ४। सू ८ ॥

इत्त्वार्थमिति । (कै)

द्विवचनेऽची ति स्थानिवत्त्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थ ॥

प्रसङ्गादिति । (कै)

वर्णप्रत्याहारजग्रहादित्यर्थ ॥

[1]सन्यत इद्भवतीति (भा)

विहितमित्त्वमिहानुवर्त्तमान 'परार्थं भविष्यती ति भाष्येऽन्वय । तत्र [2]"सन्यत इत्यभिधान स्वरूपेणेत्त्वमपूर्वं न भवतीति प्रदर्शनार्थं तद्भ्रमयन्नाह

[3]अपूर्वमुत्त्वमिति । (कै)

अपूर्वत्व तदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह पर ।

ममापि तर्ह्युत्त्वमिति ॥ (भा)

तद्व्याचष्टे

[4]उत्त्वमपीति । (कै)

नापूर्वत्व तदभावमात्रेण वैषम्यमभिप्रेत किन्तु गौरवतदभावाभ्यामिति दर्शयितु भाष्ये

इत्त्वमपीति ॥ (भा)

---

१ अ ७। पा ४। सू ७९ ॥ २ अ ७। पा ४। सू ७९ ॥

३ इत्त्वार्थं प्रसङ्गात्त ज्ञापक त्वया त्वपूर्वमुत्त्व वक्तव्यमित्यर्थः । वै ॥

४ उत्त्वमप्यन्यार्थं वक्तव्य तदेवाधिकविषये उपजीव्यत इत्यर्थं ॥

तदुपपादयति

यचेति । (कै)

गुणावादेशयोरिति शेष ॥

वक्तव्यमिति । (कै)

णोर्नेति वक्तव्यमित्यर्थ ॥

नन्वसतीति । (कै)

असत्यपीत्यर्थ ॥

यदीति । (कै)

लघुपरत्वाभावेन सन्वत्त्वाभावोऽचिकीर्त्तदित्यत्र दोष । दिद्वनीयिषतीत्यादावपि दोषो बोध्य ॥

अथ तुल्येति । (कै)

अवर्णपरत्व यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससञ्ज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा तत्र द्विवचनेनान्तरङ्गनित्ये बाध्येते इत्यर्थ ॥

चक्रतुरिति । (कै)

दिद्वनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागोजिभट्टविरचिते महाभाष्यप्रदीपोद्योते प्रथमाध्यायस्य प्रथमे पादे अष्टमाह्निकम् ॥

---

# अदर्शनं लोपः । १ । १ । ६० ॥

ननु अपत्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धैवार्थस्य सञ्ज्ञा इत्यत आह

[1]स्वरूपमिति ॥ (कै)

नानुवादे इति । (कै)

तत्र हि न सञ्ज्ञाकृतोऽभाव इत्यर्थ ॥ भाष्ये

[2]उक्तमिति । (भा)

[3] नवेतिविभाषा इत्यत्रेत्यर्थ ॥ असम्बद्धपदव्यवायान्नानुवृत्तिरत आह

[4]लोप इतीति । (भा)

तदर्थान्वययोग्यताया अर्थे एव सत्त्वाददर्शनशब्दस्य तादृशार्थसञ्ज्ञाकरणे फलाभाव इति भाव । प्रसक्तादर्शनस्येत्यर्थलाभार्थं स्थाने पदस्यैवास्याप्यनुवृत्ति सुलभा । 'लुप्लृ छेदने' इति धात्व-

१ अ १ । पा १ । सू ६८ ॥

२ लोपसञ्ज्ञायामर्थसतोरुक्तम् । वा । किमुक्तम् । अर्थस्य तावदुक्तम् । इति करणोऽर्थनिर्देशार्थः (वा – अ १ । पा १ । सू ४४) इति ॥

३ अ १ । पा १ । सू ४४ ॥

४ अथ ननु इत्वयाणोऽदर्शन तस्मादत्र लोप इति लोपसञ्ज्ञा प्राप्नोति ॥

र्थानुसारेणान्वयलाभसम्भवादिति तु भाष्यतात्पर्यम् । [1]अभावो लोप' इति [2]अवसानसञ्ज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाभाव एवार्थेति बोध्यम् । [3] स्वं रूपम इत्यस्य प्रत्याख्याने तदनुवृत्तिं विनापि सिद्धिरिति बोध्यम् ॥ नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्यय दोष इत्याह

## यदीति ॥ (कै)

अत्र प्रत्ययो नाणित्याह

## सोरिति ॥ (कै)

## ञ्णिति वृद्धिनिमित्ते इति । (कै)

[4]अङ्गसञ्ज्ञासूत्रे प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणात वृद्धिविधौ ञ्णित्प्रत्ययनिरूपिताङ्गग्रहणाच्चतिभाव ॥ [5] चादिलोप' इति सग्रहायाऽऽह

## अर्थादेति । (कै)

एकवचनमुत्सगत' इत्यादिशास्त्रमर्थनिरपेक्ष विभक्तिप्रसङ्ग-

---

१ अभावो लोप । ततोऽवसानं चेति । (विरामोऽवसानम् । १ । ४ । ११ । एतत सूत्रस्य भाष्यम् ) ॥

२ अ १ । पा ४ । सू ११ ॥ ३ अ १ । पा १ । सू ६८ ॥

४ अ १ । पा ४ । सू १३ ॥

५ चादिलोपे विभाषा । ८ । १ ६३ । चवाहाहैवाना लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । चलोपे । इन्द्र वाजेषु नोऽव । शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति । वालोपे । व्रीहिभिर्यजेत । यवैर्यजेत ॥

कम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम् ॥
ननु कथं प्रसक्तस्येति लभ्यतेऽत आह

स्थाने इति । (कै)

न च पित् कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्य । आक्षेपे आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्र चेदमेव भाष्यं मानम् । किं चानुपपद्यमानेन स्वोपपादकमाक्षिप्यते यथा पीनत्वेन रात्रिभोजनं नचैव प्रकृते । न हि तत्सूत्रे आक्षेपं विना पित्कृतप्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुत्पत्तिर्नापि [1] प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरि त्युपस्थिति । अनियमप्रसक्त्यभावेन नियमफलायास्तस्या अनुपस्थितेरित्यावेदितम् । किं चाचैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासम्भव इति दिक् । यत्तु ग्रामाधिकरणिका स्थितिरित्यर्थके ग्रामे तिष्ठतीति वाक्ये [2] ल्यबलोप इति पञ्चम्यापत्तिवारणाय प्रसक्तस्य इत्यावश्यकमिति । तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधाने-नाचाप्राप्ते । तत्त्वे लिष्टापत्ति पञ्चम्या इत्यलम ॥

अर्थादिति । (कै)

कहलक्षणादित्यर्थ ॥

शास्त्रात् । (कै)

[3]"कर्मण्यण्" इत्यत ॥

---

१ परिभाषेन्दुशे — २४ ॥
२ अपादाने पचमी ( २ । ३ । २८) एतत् सूत्रस्थवार्त्तिकम् ॥
३ अ ३ । पा २ । सू १ ॥

अण प्रसङ्ग इति । (कै)

[1] यस्मात्प्रत्ययविधि इत्यत्र विधि प्रसङ्ग एव निविष्ट इत्यङ्गत्वमस्तीत्यभिमान ॥

षष्ठीग्रहणमिति । (कै)

तच्च षष्ठ्यन्त वैयधिकरण्येनाऽदर्शनान्वयीति बोध्यम् ॥

अचाऽपीति । (कै)

शास्त्रत प्रसक्तिरेवाऽभिमतेति बोध्यमिति भाव । अयतोऽपि प्रसक्तिर्गृह्यते इत्युत्तरम् ॥

अणोऽचेति । (कै)

परिहृत्य चाऽपवादविषयमिति न्यायेन प्रसङ्ग एव नास्तीति भाव ॥

---

# प्रत्ययस्य लुक्श्लुलुपः । १ । १ । ६१ ॥

ननु लुगादिविधौ प्रत्ययादर्शनविधियथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह

लुगादीति ॥ (कै)

साक्षादिति । (कै)

लुगणिञोरित्यादौ ॥

---

[1] अ १ । पा ४ । सू १३ ॥

क्वचिदिति । (कै)

यथा [1] लुग्वा दुह इत्यादौ [2] क्सस्ये ति ॥

क्वचिदिति । (कै)

वक्ष्यमाणसूत्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थ ॥ ननु 'अदर्शनस्येमा संज्ञा' इति अप्रत्ययस्यैता इत्यनुपपन्नमत आह

अविद्यमान इति । (कै)

प्रतियोगिविशेषणत्वेनेति शेष । वस्तुतोऽवसानसंज्ञासूत्रवक्ष्यमाणरीत्या प्रत्ययाभावस्यैवेमा संज्ञा इति भाष्याभिप्राय ॥ भाष्ये

गोरपीति । (भा)

[3] गोस्त्रियो इति समुदायाऽनुवृत्तेरितिभाव ॥ ननु [3] गोस्त्रियो इत्यत्र स्त्रीति स्वरितगुणयुक्त इति [4] "स्त्रियाम्" इत्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात्प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि कुतो नोक्तमत आह

पञ्चेन्द्र इति ॥ (कै)

गोनिवृत्ति प्रत्ययग्रहण विनाऽपि सिध्यतीति शङ्कते

गोरिति ॥ (कै)

पञ्चगु (कै)

इत्यत्र क्रीतार्थठको [5]"अध्यर्द्धे"ति लुक् ॥

---

१ अ ७।पा २।सू ७३॥ २ अ ७।पा ३।सू ७२॥
३ अ १।पा २।सू ४८॥ ४ अ ४।पा १।सू ३॥
५ अ ५।पा १।सू २८॥

## क्ते इति । (कै)

परत्वादितिभाव । अन्तरङ्गानपीति न्यायस्तु अन्तरङ्गनिमित्त-विनाशकप्रत्ययलुग्विषय इति तात्पर्य्यम् । न च समासान्ते तेन व्यवधानात् कथ लुक् । गोरित्यनुवृत्तिसामर्थ्येन लुकप्राप्तेरिति-बोध्यम् ॥ नित्यशब्दाऽन्वाख्यानाभिप्रायेण शङ्कते

## नन्विति ॥ (कै)

## समुदायस्येति । (कै)

[1] यस्येति च इत्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वा-देश स्यादित्यथ ॥ ननु योगविभागे सूत्रभेद कृत स्यादत आह

## एकयोगेति ॥ (कै)

प्रकारान्तरम्' । योगविभागरूपम् ॥

## छयताविति । (कै)

कसात् [2] प्राक्क्रीताच्छ परश्चो [3] उगवादिभ्यो यत ॥ कसे कसे स परश्चौ आङ्परयो खनिश्टृभ्या डिच्च इत्युप्रत्यय ॥

## अत क्त इति । (कै)

धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात् कमिग्रहणेनैव सिद्धे इति शेष । कसेस्तु कस इति न रूपम । अनभिधानादितिभाव ।

---

१ अ ६ । पा ४ । सू १४८ ॥ २ अ ५ । पा १ । सू १ ॥
३ अ ५ । पा १ । सू २ ॥

अत एवेह "कमेः सः कंस" इति भाष्ये उक्तम् ॥ नन्वेवमपि विशिष्टनिर्देशाऽभावे यञञोरपि लुक् स्यादत आह

यञञोरिति । (कै)

विकारावयवार्थप्रतीतये ह्यौत्सर्गिकाण एव लुकं विदध्यात् । न च यञञ्लुक्तां सामर्थ्याद्विकल्पोऽस्तु वेत्यनुक्तिस्तु यञञ्भ्यां मुक्त औत्सर्गिकाणः श्रवणाभावायेति वाच्यम् । यञञ्लुकामेककाल-प्रतीतानामुद्देश्यविधेयभावासम्भवात् । [1]"ट्युट्युलौ तुट् च" इत्यादौ तु [2]"अनद्यतन" इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः । किं च [3]"कंसीयपरशव्ययोः" इति षष्ठीनिर्देशादपि न यञञोर्लुक् । अन्यथा पंचम्यैव निर्दिशेदितिभावः ॥

प्रकृतीति । (कै)

प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः । तेन नञा समासे प्रकृतिरुच्यते इत्यर्थः ॥ भाष्ये

[4]ङ्याबिति । (भा)

प्रातिपदिकात्परस्य लुगित्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे

---

१ अ ४ । पा ३ । सू २३ ॥

२ अ ३, ५ । पा २, ३ । सू १११, १५, २१ ॥

३ अ ४ । पा ३ । सू १६८ ॥

४ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् । वा । यञ्ञोश्च लुगर्थम् । वा (४ । १ । १) ॥

उभयो प्रातिपदिकात्परत्वाभावेन परिशेषात [1]कसीयाद्यवयव-प्रातिपदिकात् परयोश्छयतोरेव लुगित्यर्थ ॥

**विशिष्टेति।** (कै)

जनपदार्थकप्रत्ययसम्बन्धिन इत्यर्थ ॥ भाष्ये

**प्रकृतमिति।** (भा)

अत एव [2] लवणाल्लुग् इत्यत्र प्रकृतठक एव लुगिति बोध्यम्। शोभना पञ्चाला इत्यादौ इति पाठ उचित ॥

**अनन्तरस्येति।** (कै)

अव्यवहितस्येत्यर्थ । [3]जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थ इति भाव ॥ वार्त्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति

**[4]आगमस्येति॥** (कै)

**चय इति।** (कै)

एव च वैषम्याद्यथासख्याप्राप्तेरागमस्ययोऽपि कुण्डिना कुण्डिना-श्चागमत्वय स्यु । लुक् च ज्ञापकात सर्वादेश इति विभक्तिमात्र श्रूयेतेतिभाव ॥

**द्वावेवेति।** (कै)

तेन नोक्तापत्तिरितिभाव ॥

---

१ कसीयपरशव्ययोर्यञ्छौ लुक च । ४ । ३ । १६८ ॥

२ अ ४ । पा ४ । सू २४ ॥

३ जनपदे लुप् (इत्यनेन) ४ । २ । ८१ ॥

४ अ २ । पा ४ । सू ७ ॥

सर्वचेति । (कै)

अजादिप्राग्दीव्यतीयविषयेऽपीतिभाव ॥

अवृद्धत्वादिति । (कै)

यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छ सिध्यति तथाप्यवृद्धत्वात् प्रकृतेश्छस्य वृद्धनिमित्तत्वाच्च आकारश्रवण न स्यादिति भाव । सन्नियोगशिष्टत्वादगस्त्यादेशाभावे प्रतिषेधप्रयुक्तलुगभावो हेतु ॥

गोत्रे विहित इति । (कै)

नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहण न तु अनन्तरापत्यप्रत्ययान्तस्येत्येतदर्थं तदनुवृत्तिस्स्यात् । [1] शिवादिभ्य इत्यत्रैव गोत्र इति निवृत्तेश्चाण्यण् साधारणोऽगस्त्यप्रकृति [2]ऋष्यणन्त एवाऽऽगस्त्य न लगस्तिप्रकृतिक [3]गर्गादियञन्त । [4] यञञोस्र इति लुका सिद्धत्वादिति चेन्न । कौण्डिन्यसाहचर्य्यणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणाद् भाष्यमते गोत्रसञ्ज्ञासूत्रपय्यन्त गोत्राधिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च । वस्तुतो वार्त्तिककारस्यापीत्थमेव सम्मतमित्याह

वचनेति ॥ (कै)

सामर्थ्याल्लोपस्यैव सर्वादिशत्व कुतो न कल्प्यत इत्यत आह

विपर्य्यय इति । (कै)

न उपसञ्जातो विरोधी वैयर्थ्यप्रसङ्गोऽस्त्र यस्य तत्त्वादित्यर्थं ॥

---

१ अ ४ । पा १ । सू ११२ ॥ २ अ ४ । पा १ । सू ११४ ॥
३ अ ४ । पा १ । सू १०५ ॥ ४ अ २ । पा ४ । सू ६४ ॥

नत्वयमिति । (कै)

अयम् अवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न किन्तु मुख्य एव अवयवलोपे समुदायस्यापि लोपादित्यर्थ ॥

अनुनासिकेति । (कै)

[1]'अनुदात्तोपदेश इत्यनेन ॥

आयंसीत (भा)

इत्यत्र [2]'आङो यमहन' इत्यात्मनेपदैकवचनम ॥

[3]सग्मीयेति । (भा)

गमेर्विधिलिङि [4]'समो गम्यृच्छि' इत्यात्मनेपदे इटि शपो बहुलं छन्दसी ति लुकि लिङ सलोपे इटोऽति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोप स्यात् । इद च प्रयोजनम् अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्त्तिकमते बोध्यम ॥

---

# प्रत्ययलोपे प्रत्ययलक्षणम् ।१।१।६२॥

लक्षणशब्दार्थमाह

---

१ अ ६ । पा ४ । सू ३७ ॥ २ अ १ । पा ३ । सू २८ ॥

३ बहुषु भाष्यपुस्तकेषु "स रायस्पोषेण ग्मीयेति' इति पाठोऽस्ति । इलाहाबादीयभाष्यपुस्तके "रायस्पोषेण सग्मीयेति' इति पाठोऽस्ति ॥

४ अ १ । पा ३ । सू २९ ॥

[1]निमित्तमिति ॥ (कै)

कार्य्यमिति । (कै)

बहुव्रीहिर्लभ्यम् ॥

प्रत्यासत्त्येति । (कै)

क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्य्य-वारणाय प्रत्यासत्तिराश्रयणीयेति भाव ॥ ननु प्रत्ययलक्षणम् इत्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्य्यप्रापणायातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्य्यातिदेशेनात आह

प्रत्ययस्य लक्षणमिति । (कै)

यस्य लोपस्तस्मिन् सति य प्रत्ययो भवति तस्य तल्लोपेऽपि प्रादुर्भाव इत्यर्थलाघवात् षष्ठीतत्पुरुष एव स्यादिति तात्पर्य्यम् ॥ रमे क्यनि हन्तेश्च क्ते [2] अनुदात्त इत्यनुनासिकलोपेऽगुरूपो-त्तमत्वादप्राप्त य्यङतिदेशत स्यादित्यथ ॥

एवं हि लोपेति । (कै)

ननु [3]"णेरनिटि" इत्यादिसामर्थ्यात् माभूत्तत्र प्रवृत्ति । यस्तु सामान्येन लोपो णाविष्टवद् इति सोऽप्रत्ययविषये चरितार्थ इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुन प्रादुर्भावार्थमिद स्यादिति

---

१ "प्रत्ययग्रहणं किमर्थम्"। इति भाष्यमुपादाय "प्रत्ययनिमित्त कार्य्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भावः" इत्युक्तम् ॥

२ अ ६ । पा ४ । सू ३७ ॥ ३ अ ६ । पा ४ । सू ५१ ॥

